# THE TARKAKAUMUDÎ

OF

## LAUGÂKSHI BHÂSKARA.



EDITED

BY

WÂSUDEVA LAXMAṆ SHÂSTRÎ PAṆSÎKAR.

---

**Fourth Revised Edition.**

---


PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JAVAJI DADAJI'S "NIRNAYA-SAGAR" PRESS.

**BOMBAY.**

---

1914.

---

*Price 2 Annas.*

॥ श्रीः ॥

लौगाक्षिभास्करशर्मविरचिता

# तर्ककौमुदी ।



पणशीकरोपाह्वविद्वद्वरलक्ष्मणशर्मतनुजनुषा वासुदेवशर्मणा संस्कृता ।



चतुर्थं संस्करणम् ।




सा च

शके १८३६ वत्सरे

मुम्बय्यां

तुकाराम जावजी,

इत्येतैः स्वीये निर्णयसागराख्यमुद्रणयन्त्रेऽङ्कयित्वा प्रकाशिता ।





मूल्यं रूप्यकाष्टमांशः ।

॥ श्रीः ॥

# तर्ककौमुदी ।

श्रीवासुदेवं नवनीरदाभं रमाधरालंकृतपार्श्वभागम्
मत्स्यादिरूपैः कृतलोकतोषं विद्यानिदानं परमं नमामि ॥

अक्षपादं मुनिं नत्वा कणादं च ततः परम् ।
लौगाक्षिणा भास्करेण तन्यते तर्ककौमुदी ॥

तत्राभिधेयाः पदार्थाः । ते च द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्तैव । तत्र द्रव्याणि । पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव । गुणास्तु रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नगुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दाश्चतुर्विंशतिगुणाः । कर्माण्युत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्चैव । सामान्यं द्विविधम्—परमपरं च । नित्यद्रव्याणामानन्त्यात्तद्वृत्तयो विशेषास्त्वनन्ता एव । समवायस्त्वेक एव । अभावो द्विविधः—संसर्गाभावोऽन्योन्याभावश्चेति । द्रव्यत्वसामान्यवद्गुणवद्वा द्रव्यम् । गुणत्वसामान्यवान्द्रव्यकर्मभिन्नः सामान्यवान्वा गुणः । कर्मत्वसामान्यवच्चलनात्मकं वा कर्म । नित्यमेकमनेकसमवेतं सामान्यम् । अयमस्माद्व्यावृत्त इति व्यावृत्तिबुद्धिमात्रहेतुर्विशेषः । नित्यसंबन्धः समवायः । भावभिन्नोऽभावः । इति द्रव्यादिसामान्यलक्षणानि ॥

अथ तद्विशेषलक्षणान्युच्यन्ते—पृथिवीत्वसामान्यवती पृथिवी, रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वसंस्कारात्मकचतुर्दशगुणवती सा द्विधा—नित्यानित्या च । नित्या परमाणुलक्षणा, अनित्या कार्यलक्षणा । सापि त्रिविधा—शरीरेन्द्रियविषयभेदात् । शरीरमपि द्विविधम्—योनिजमयोनिजं च । तत्र शुक्रशोणितसंनिपातजं योनिजमस्मदादीनां प्रत्यक्षसिद्धम् । शुक्रशोणितसंनिपातं विना धर्मविशेषसहकृतपरमाणुप्रभवमयोनिजं देवर्षिनारदादीनाम् । इन्द्रियं गन्धग्राहकं घ्राणं

नासाग्रवर्ति । विषयो मृत्पाषाणस्थावरभेदात्त्रिविधः । मृत्पाषाणौ प्रसिद्धौ । स्थावरो वृक्षलतादिः ॥

अप्त्वसामान्यवत्य आपः, रूपरसस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहसंस्कारात्मकचतुर्दशगुणवत्यः । ता अपि द्विविधाः—नित्या अनित्याश्चेति । नित्याः परमाणुलक्षणाः, अनित्याः कार्यलक्षणाः । ता अपि त्रिविधाः—शरीरेन्द्रियविषयभेदात् । शरीरमयोनिजमेव वरुणलोके प्रसिद्धम् । इन्द्रियं रसग्राहकं रसनं रसनाग्रवर्ति । विषयः सरित्समुद्रादिर्हिमकरकादिश्च ॥

तेजस्त्वसामान्यवत्तेजः, रूपस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वसंस्कारात्मकैकादशगुणवत् । तद्द्विविधम्—नित्यमनित्यं च । नित्यं परमाणुलक्षणम्, अनित्यं कार्यलक्षणम् । तदपि त्रिविधम्—शरीरेन्द्रियविषयभेदात् । शरीरमयोनिजमेवादित्यलोके प्रसिद्धम् । इन्द्रियं रूपग्राहकं चक्षुः कृष्णताराग्रवर्ति । विषयलक्षणं तेजश्चतुर्विधम्—भौमदिव्योदर्याकरजभेदात् । पार्थिवेन्धनं वह्न्यादिकं भौमम् । अबिन्धनसौरविद्युद्वडवानलादि दिव्यम् । भुक्ताहारपरिणामहेतुर्जठरानलरूपमुदर्यम् । सुवर्णरजताद्याकरजम् ॥

वायुत्वसामान्यवान्वायुः, स्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारात्मकगुणनवकवान् । स द्विविधः—नित्योऽनित्यश्च । नित्यः परमाणुलक्षणः, अनित्यः कार्यलक्षणः । अनित्यश्चतुर्विधः—शरीरेन्द्रियविषयप्राणभेदात् । शरीरमयोनिजमेव वायुलोके प्रसिद्धम् । इन्द्रियं स्पर्शग्राहकं सर्वशरीरव्यापि त्वक् । विषयो महावाय्वादिः । शरीरान्तःसंचारी वायुः प्राणः । 'हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः । उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः ॥' स एव क्रियाभेदात्प्राणापानव्यानोदानसमानसंज्ञां लभते, न तु शरीरे पञ्च मूर्तानां समानदेशताविरोधात् ॥

मूर्तत्वे सति निरवयवः परमाणुः । स चातीन्द्रिय एव । तदुक्तम्—'जालान्तरस्थसूर्यांशौ यत्सूक्ष्मं दृश्यते रजः । भागस्तस्य च षष्ठो यः पर-

माणुः स उच्यते ॥' कारणपश्चाद्भावि कार्यम् । तच्च द्व्यणुकत्र्यणुकादिभेदेनानन्तविधम् । तत्र द्वयोः परमाण्वोः संयोगाद्व्यणुकम्, त्रयाणां द्व्यणुकानां संयोगात्त्र्यणुकम्, चतुर्णां त्र्यणुकानां संयोगाच्चतुरणुकम् । एवं पञ्चाणुकादिभोगायतनमन्त्यावयवि शरीरम् । सुखदुःखान्यतरसाक्षात्कारो भोगः । द्रव्यानारम्भकं कार्यद्रव्यमन्त्यावयवि । शरीरसंयुक्तं ज्ञानकरणमतीन्द्रियमिन्द्रियम् । ज्ञायमानत्वे सति भोगसाधनं विषय इति ॥

शब्दसमवायिकारणमाकाशः, शब्दसंख्यापरिमाणपृथक्त्वसंयोगविभागगुणषट्कवान् । स च लाघवादेकः, सर्वत्र कार्योपलम्भाद्विभुः, विभुत्वाच्च नित्यः । तथापि कर्णशष्कुल्यवच्छिन्नः सञ्शब्दग्राहकश्रोत्रेन्द्रियात्मकः ॥

ज्येष्ठत्वकनिष्ठत्वज्ञानाधीनपरत्वापरत्वानुमेयः कालः, संख्यापरिमाणपृथक्त्वसंयोगविभागगुणपञ्चकवान् । सोऽप्येको विभुर्नित्यश्च । तथाप्युपाधिभेदात्त्रिविधः—अतीतोऽनागतो वर्तमानश्चेति । तद्व्यक्तिध्वंसविशिष्टः कालस्तद्व्यक्तेरतीतकालः, तद्व्यक्तिप्रागभावविशिष्टः कालस्तद्व्यक्तेरनागतकालः, तद्व्यक्तिध्वंसप्रागभावानवच्छिन्नः कालस्तद्व्यक्तेर्वर्तमानकालः ॥

दूरत्वसंनिहितत्वज्ञानाधीनपरत्वापरत्वानुमेया दिक्, संख्यापरिमाणपृथक्त्वसंयोगविभागगुणपञ्चकवती । साप्येका विभ्वी नित्या च । तथाप्युपाधिभेदाच्चतुर्विधा—प्राची प्रतीच्युदीची दक्षिणा चेति । उदयाचलसंनिहिता दिक्प्राची, अस्ताचलसंनिहिता दिक्प्रतीची, सुमेरुसंनिहिता दिगुदीची, सुमेरुव्यवहिता दक्षिणा च ॥

आत्मत्वसामान्यवानात्मा । स द्विविधः—जीवेश्वरभेदात् । अनित्यज्ञानादिमाञ्जीवः, संख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारगुणचतुर्दशवान् । स च सुखदुःखादिवैचित्र्यात्प्रतिशरीरं भिन्नः । नित्यज्ञानादिमानीश्वरः, संख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धीच्छाप्रयत्नगुणाष्टकवान् । स चैक एव शरीररहितश्च शरीरहेत्वदृष्टाभावात् । यद्वा सोऽपि शरीरी, पुरुषादृष्टेन कान्ताशरीरस्येवास्मदीयादृष्टेन तच्छरीरस्य जननसंभवात् । न चास्मदीयादृष्टेन मुक्तस्यापि शरीरोत्पादः स्यादिति वाच्यम्, शरीरहेतोरिच्छादेस्तत्राभावात् । अतएव चतुर्भुजत्वादिश्रवणं संगच्छते । द्विविधोऽप्यात्मा—विभुर्नित्यश्च ॥

मनस्त्वसामान्यवन्मनः, संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारगुणाष्टकवत् । तदेव सुखाद्युपलब्धिसाधनमिन्द्रियं प्रतिजीवं भिन्नमणु नित्यं च । इति द्रव्यविशेषलक्षणानि ॥

अथ गुणविशेषलक्षणान्युच्यन्ते—चक्षुर्मात्रग्राह्यजातिमान्गुणो रूपम् । गुणपदं प्रभावारणाय । तच्छुक्लकृष्णपीतरक्तहरितकपिलभेदात्षड्विधम् । शुक्लादि षड्विधं पृथिव्यामेव, शुक्लं स्वच्छं जले, शुक्लभास्वरं तेजसि ॥

रसनामात्रग्राह्यजातिमान्रसः । स च मधुरतिक्तकटुकषायाम्ललवणभेदात्षड्विधः । षड्विधोऽपि रसः पृथिव्यामेव । मधुर एव जले ॥

घ्राणमात्रग्राह्यजातिमान्गन्धः । स द्विविधः—सुरभिरसुरभिश्च । द्विविधोऽपि गन्धः पृथिव्यामेव ॥

त्वङ्मात्रग्राह्यजातिमान्स्पर्शः । स त्रिविधः—शीतोष्णानुष्णाशीतभेदात् । शीतो जले, उष्णस्तेजसि, अनुष्णाशीतः पृथिवीवाय्वोः ॥

द्विविधायामपि पृथिव्यां रूपादयश्चत्वारोऽप्यनित्याः पाकजाश्च । तत्र हि तेजःसंयोगात्पूर्वश्यामादिनिवृत्तौ रक्ताद्युत्पाददर्शनात् । तत्रापि पूर्वरूपादिनाशकरूपाद्यन्तरोत्पादकः पाकः परमाणुष्वेवेति वैशेषिकमतम् । द्व्यणुकाद्यवयविन्यपीति नैयायिकाः । जलतेजोवायुषु च नित्यगता रूपादयो नित्याः, अनित्यगताश्चानित्याः । उद्भूतानुद्भूतभेदेनापि रूपादयश्चत्वारो द्विविधाः । घ्राणरसनचक्षुस्त्वगादावनुद्भूताः । उद्भूतास्तु योग्यपृथिव्याद्यारम्भकपरमाणुकद्व्यणुकादौ । चित्राचित्रभेदेनापि ते द्विविधा इत्यपि केचित् । नीलपीतादिमधुरतिक्तादिसुरभ्यसुरभ्यादिसुकुमारकठिनाद्यवयवारब्धपटादिषु चित्राः । अन्यत्राचित्राः ॥

गणनाव्यवहारासाधारणं कारणं संख्या । सा द्विविधा—एकानेकवृत्तिभेदात् । तत्रैकत्वमेकवृत्ति । तच्च नित्यगतं नित्यम्, अनित्यगतमनित्यमेव । परमाणुद्व्यणुकादावतीन्द्रिये तु भगवदपेक्षाबुद्धिजन्यमदृष्टनाशनाश्यम् ॥

मानव्यवहारासाधरणं कारणं परिमाणम् । तच्चतुर्विधम्—अणु ह्रस्वं महद्दीर्घं चेति । अणुह्रस्वपरिमाणे परमाणुद्व्यणुकयोः । महद्दीर्घपरिमाणे

त्र्यणुकचतुरणुकादौ । चतुर्विधमपि द्विविधम्—नित्यमनित्यं च । नित्यगतं नित्यम्, अनित्यगतमनित्यम् । तत्रिविधम्—संख्याजन्यं प्रमाणजन्यं प्रचयजन्यं चेति । तत्र द्व्यणुकपरिमाणं परमाणुद्वित्वसंख्याजन्यम्, त्र्यणुकपरिमाणं च द्व्यणुकत्रित्वसंख्याजन्यम् । तत्रावयवगताणुपरिमाणस्यासमवायित्वे तस्याणुतरत्वप्रसङ्गात्, परिमाणस्य स्वसमानजातीयोत्कृष्टजनकत्वनियमात् । चतुरणुकादिपरिमाणं प्रमाणजन्यम्, अवयवगतमहत्त्वस्यैव तत्रासमवायित्वात् । तूलपिण्डपरिमाणं प्रचयजन्यम्, अवयवानां प्रशिथिलः संयोगः प्रचयः, तस्यैव तत्रासमवायित्वात् ॥

पृथग्व्यवहारासाधारणं कारणं पृथक्त्वम् । तदपि द्विविधम्—एकानेकवृत्तिभेदात् । तत्रैकपृथक्त्वमेकवृत्ति । इदं च नित्यगतं नित्यम्, अनित्यगतमनित्यम् । द्विपृथक्त्वाद्यनेकवृत्ति । तच्च नानैकपृथक्त्वविषयापेक्षाबुद्धिजन्यम्, तन्नाशनाश्यम् ॥

संयुक्तव्यवहारासाधारणं कारणं संयोगः । स द्विविधः—कर्मजः संयोगजश्चेति । कर्मजोऽपि द्विविधः—अन्यतरकर्मज उभयकर्मजश्च । आद्यः श्येनशैलयोः, द्वितीयस्तु मेषयोर्मल्लयोर्वा । हस्ततरुसंयोगात्कायतरुसंयोगः संयोगजः ॥

विभक्तव्यवहारासाधारणं कारणं विभागः । सोऽपि द्विविधः—कर्मजो विभागजश्चेति । कर्मजोऽपि द्विविधः—अन्यतरकर्मज उभयकर्मजश्चेति । आद्यः श्येनशैलयोः, द्वितीयस्तु मेषयोर्मल्लयोर्वा । हस्ततरुविभागात्कायतरुविभागो विभागजः । संख्यादयः पञ्च सर्वद्रव्यवृत्तयः ।

परव्यवहारासाधारणं कारणं परत्वम् । अपरव्यवहारासाधारणं कारणमपरत्वम् । ते द्विविधे—दिक्कृते कालकृते चेति । यो यदपेक्षया ज्येष्ठस्तत्र तदवधिकं परत्वं कालकृतम् । यो यदपेक्षया कनिष्ठस्तत्र तदवधिकमपरत्वं कालकृतम् । अत्र कालपिण्डसंयोगोऽसमवायी, ज्येष्ठत्वकनिष्ठत्वज्ञानं निमित्तम्, तन्नाशश्च तन्नाशनिमित्तम् । एतेऽनित्यद्रव्य एव । यो यदपेक्षया दूरस्थस्तत्र तदवधिकं परत्वं दिक्कृतम् । यो यदपेक्षया संनिहितस्तत्र तदव-

व्याप्य इति व्याप्तिज्ञानम् । वह्निव्याप्यधूमवानयमिति तृतीयलिङ्गपरामर्शो व्यापारः । तृतीयत्वं कथमस्येति चेदुच्यते । महानसादौ दृष्टान्ते वह्निधूमयोर्भूयःसहचारदर्शनाद्व्याप्यत्वेन धूमज्ञानं प्रथमम् । ततः पर्वतादौ धूमं दृष्ट्वा व्याप्यत्वेन तत्स्मरणं द्वितीयम् । ततस्तत्रैव व्याप्यत्वेन धूमस्य परामर्शो वह्निव्याप्यधूमवानयमित्येवंरूपो जायत इति तृतीयत्वं तस्येति बोध्यम् । लिङ्गज्ञानजन्यं लिङ्गिज्ञानमनुमितिः । यथा पर्वतादौ धूमज्ञानानन्तरं पर्वतो वह्निमानिति ज्ञानम् । व्याप्तिपक्षधर्मतावल्लिङ्गम् । ननु केयं व्याप्तिरिति चेदुच्यते । अव्यभिचरितसामानाधिकरण्यं व्याप्तिः । अस्ति चेदं पर्वतो वह्निमान्धूमवत्त्वादित्यादिसद्धेतौ, यत्र यत्र धूमस्तत्र तत्र वह्निरिति नियमत्वात् । नास्ति चेदं पर्वतो धूमवान्वह्निमत्त्वादित्याद्यसद्धेतौ, यत्र यत्र वह्निस्तत्र तत्र धूम इति नियमस्यासत्त्वात् । तप्तायःपिण्डे वह्निमत्त्वेऽपि धूमासत्त्वात् । व्यभिचारज्ञानविरहसहकृतं हेतुसाध्यसहचारदर्शनं व्याप्तिग्राहकम् । कथमेतदिति चेत्, इत्थम् । हेतोः साध्याभाववद्वृत्तित्वं व्यभिचारस्तज्ज्ञाने सति व्याप्तिग्रहाभावात्तदभावस्तत्र कारणम् । हेतुसाध्यसहचारदर्शनं त्वन्वयव्यतिरेकाभ्यां तत्र कारणम् । का पुनः पक्षधर्मता । पक्षताश्रयवृत्तित्वं पक्षधर्मता । पक्षता चानुमित्साविरहविशिष्टसाध्यनिश्चयाभावः । अस्ति चेदं पर्वतादौ पक्षेऽनुमित्साविरहविशिष्टसाध्यनिश्चयस्य तत्राभावात् । पर्वतादौ साध्यनिश्चये सत्यपि, सत्यां चानुमित्सायां पर्वतो वह्निमानित्यनुमितिसंभवात्तत्र पक्षतासंपत्तयेऽनुमित्साविरहविशिष्टत्वं साध्यनिश्चयविशेषणम् । तथा चानुमित्साविरहविशिष्टसाध्यनिश्चयस्य तत्राभावात्पक्षता ॥

तच्चानुमानं त्रिविधम्—केवलान्वयि केवलव्यतिरेक्यन्वयव्यतिरेकि चेति । यत्रान्वयव्याप्तिरेवास्ति, तत्केवलान्वयि । यथा घटोऽभिधेयः प्रमेयत्वादिति । अत्र घटः पक्षस्तस्याभिधेयत्वं साध्यम् । प्रमेयत्वं हेतुः । तस्मिन्यत्र यत्र प्रमेयत्वं तत्र तत्राभिधेयत्वम् । यथा घट इत्यन्वयव्याप्तिरेवास्ति न तु यत्र यत्र साध्याभावस्तत्र तत्र हेत्वभाव इति व्यतिरेकव्याप्तिः, अभिधेयस्य प्रमेयत्वस्य च सर्वत्र सत्त्वात्साध्याभावादेरेवाप्रसिद्धत्वात् । यत्र व्यतिरेकव्याप्तिरेवास्ति तत्केवलव्यतिरेकि । यथा जीवच्छरीरं सात्मकं प्राणादिमत्त्वादि-

त्यादि । अत्र जीवच्छरीरं पक्षः, तस्य सात्मकत्वं साध्यम्, प्राणादिमत्त्वं हेतुः । तस्मिन्यत्र यत्र सात्मकत्वाभावस्तत्र तत्र प्राणादिमत्त्वाभावः । यथा घटादौ । इति व्यतिरेकव्याप्तिरेवास्ति । न तु यत्र यत्र प्राणादिमत्त्वं तत्र सात्मकत्वमित्यन्वयव्याप्तिर्दृष्टान्ताभावाज्जीवच्छरीरमात्रस्य पक्षीकरणात्, अन्यत्र च हेतुसाध्ययोरेवासत्त्वात् । यत्रान्वयव्याप्तिर्व्यतिरेकव्याप्तिश्च निगद्यते तदन्वयव्यतिरेकि । यथा पर्वतो वह्निमान्धूमादित्यादि । अत्र च पर्वतः पक्षः, तस्य वह्निमत्त्वं साध्यम्, धूमादिति हेतुस्तस्मिन् । यत्र यत्र धूमस्तत्र तत्र वह्निः । यथा महानसादौ । इत्यन्वयव्याप्तिः । यत्र यत्र वह्न्यभावस्तत्र तत्र धूमाभावः । यथा जलमहाह्रदौ । इति व्यतिरेकव्याप्तिश्चास्ति । 'अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते । साध्याभावोऽन्यत्र व्याप्यो व्यापकः साधनात्ययः ॥ व्याप्यस्य वचनं पूर्वं व्यापकस्य ततः परम् । एवं परीक्षिता व्याप्तिः स्फुटीभवति तत्त्वतः ॥' इति । त्रयाणां मध्ये योऽन्वयव्यतिरेकी, स पञ्चरूपोपपन्न एव स्वसाध्यं साधयति । तानि पञ्चरूपाणि—पक्षधर्मत्वं सपक्षे सत्त्वं विपक्षाद्व्यावृत्तिरबाधितविषयत्वमसत्प्रतिपक्षत्वं चेति । पक्षताश्रयवृत्तित्वं पक्षधर्मत्वम् । निश्चितसाध्यवान्सपक्षः । तत्र विद्यमानत्वं सपक्षसत्त्वम् । निश्चितसाध्याभाववान्विपक्षः । तत्राविद्यमानत्वं विपक्षाद्व्यावृत्तिः । प्रमाणान्तरेणाप्रमितसाध्याभावकत्वमबाधितविषयत्वम् । साध्याभावसाधकहेत्वन्तरशून्यत्वमसत्प्रतिपक्षत्वम् । एतानि पञ्चरूपाणि वह्निसाधकधूमादावन्वयव्यतिरेकिणि विद्यन्ते । केवलान्वयिनि विपक्षाद्व्यावृत्तिर्नास्ति, विपक्षाप्रसिद्धेः । केवलव्यतिरेकिणि सपक्षे सत्त्वं नास्ति, सपक्षासिद्धेः ॥

त्रिविधमप्यनुमानं द्विविधम्—स्वार्थं परार्थं चेति । स्वस्यैवानुमितिहेतुः स्वार्थम् । स्वयं धूमादग्निमनुमाय परं बोधयितुं पञ्चावयवोपेतमनुमानवाक्यं प्रयुङ्क्ते तत्परार्थम् । पञ्चावयवास्तु प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि । तत्र पक्षे साध्यनिर्देशः प्रतिज्ञा । यथा पर्वतो वह्निमानिति । पञ्चम्यन्तं हेतुप्रतिपादकं वाक्यं हेत्ववयवः । यथा धूमादिति । व्याप्तिप्रतिपादकं वचनमुदाहरणम् । यथा यो यो धूमवान्स स वह्निमान् । यथा महानस इति ।

व्याप्तिविशिष्टस्य हेतोः पक्षधर्मताप्रतिपादकं वचनमुपनयः । यथा वह्नि-व्याप्यधूमवांश्चायमिति । अबाधितत्वासत्प्रतिपक्षितत्वतात्पर्यकं वाक्यं निगमनम्, यथा तस्माद्वह्निमानिति । यथा चायमित्युपनयस्य, तस्मात्तथेति निगमनस्य शरीरमिति प्राञ्चः । व्यतिरेकिणि प्रतिज्ञाहेतू तुल्यावेव, उदाहरणोपनयनिगमनानि तु भिद्यन्ते । यथा जीवच्छरीरं सात्मकं प्राणादि-मत्त्वादित्यत्र यत्सात्मकं न भवति तत्प्राणादिमन्न भवति । यथा घटः । न चेदं जीवच्छरीरं प्राणादिमन्न भवति तस्मान्न तथेति ॥

अथ हेत्वाभासाः—अनुमितितत्करणान्यतरप्रतिबन्धकज्ञानविषयधर्मो हेत्वाभासत्वोपाधिः, तद्वान्हेत्वाभासः । ते चानैकान्तिकविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च । तत्र सव्यभिचारोऽनैकान्तिकः । स त्रिविधः—साधारणोऽसाधारणोऽनुपसंहारी चेति । तत्र सपक्षविपक्षवृत्तिः साधारणः । यथा पर्वतो धूमवान्वह्नेरिति । वह्निर्हि सपक्षे महानसे विपक्षे तप्तायः पिण्डे च वर्तते, अतः साधारणः । एतज्ज्ञानं च विपक्षवृत्तित्वरूपव्यभिचारविषयकत्वाद्व्यभिचारज्ञानविधया व्याप्तिग्रहे प्रतिबन्धकम्, व्यभिचारज्ञाने सति व्याप्तिग्रहानुदयस्य सुप्रसिद्धत्वात् । सपक्षविपक्षव्यावृत्तत्वे सति पक्षवृत्तिरसाधारणः । यथा शब्दो नित्यः शब्दत्वादिति । शब्दत्वं हि सपक्षाद्गगनादेर्विपक्षाच्च घटादेर्व्यावृत्तं पक्षे शब्दे च वर्तत इत्यसाधारणम् । एतज्ज्ञानं च साक्षादनुमितिप्रतिबन्धकम् । कथमिति चेत्, इत्थम् । शब्दत्वं हि नान्वयी हेतुः, दृष्टान्ताभावात् । किं तु व्यतिरेकी । तथा च यो यद्वतो व्यावृत्तः स स्वाश्रये तदभावं साधयति । यथा धूमो वह्न्यभाववतो जलह्रदादेर्व्यावृत्तः स्वाश्रये पर्वतादौ वह्न्यभावाभावं साधयति । तथा शब्दत्वं नित्यत्ववतो गगनादेः सपक्षाद्व्यावृत्तमिति स्वाश्रये शब्दे नित्यत्वाभावमनित्यत्वं साधयेत् । एवं नित्यत्वाभाववतो घटादेर्विपक्षाद्व्यावृत्तमिति स्वाश्रये शब्दे नित्यत्वाभावाभावं नित्यत्वमपि साधयेत् । न चैकत्र शब्दे नित्यत्वानित्यत्वयोः संभवः, तयोर्विरोधात् । तस्माच्छब्दत्वेऽसाधारणत्वज्ञाने सति न साध्यानुमितिरिति । वस्तुमात्रपक्षकोऽनुपसंहारी ।

यथा सर्वं नित्यम्, प्रमेयत्वादि। अत्र सर्वस्यैव पक्षत्वात्प्रमेयत्वं हेतुरनुपसंहारी। एतज्ज्ञानमपि व्याप्तिग्रहे प्रतिबन्धकम्, सर्वस्य पक्षत्वे व्याप्तिग्राहकसहचारदर्शनस्थलाभावेन सहचारनिश्चयाभावे सति व्याप्तेरनिश्चयात्। साध्याभावव्याप्तो हेतुर्विरुद्धः। यथा अयं गौरश्वत्वादिति। अत्र च यत्र यत्राश्वत्वं तत्र तत्र गोत्वाभाव इति साध्याभावव्याप्तेः सत्त्वादश्वत्वं हेतुर्विरुद्धः। एतज्ज्ञानं च साक्षादनुमितिप्रतिबन्धकम्, गोत्वाभावव्याप्ताश्वत्ववत्ताज्ञाने सति गोत्वनिश्चयासंभवात्। साध्याभावसाधकहेत्वन्तरं प्रतिपक्षः। तद्वान्सत्प्रतिपक्षः। यथा पर्वतो वह्निमान्, धूमात्। महानसवत्। स वह्न्यभाववान्, पाषाणमयत्वात्। कुड्यवदिति। अत्र च द्वयोरपि हेत्वोः परस्परसाध्याभावसाधकत्वान्मिथः सत्प्रतिपक्षत्वम्। एतज्ज्ञानं च साक्षादनुमितिप्रतिबन्धकम्। वह्निव्याप्यधूमवान्वह्न्यभावव्याप्यवांश्च पर्वत इति द्विविधपरामर्शे सत्येकस्मादप्यनुमितेरभावात्परस्परं प्रतिबन्धात्। परामर्शप्रतिबन्धकज्ञानविषयधर्मोऽसिद्धिस्तद्वानसिद्धः। स त्रिविधः—आश्रयासिद्धः स्वरूपासिद्धो व्याप्यत्वासिद्धश्चेति। तत्र पक्षतावच्छेदकाभाववत्पक्षक आश्रयासिद्धः। यथा गगनारविन्दं सुरभि, अरविन्दत्वात्। सरोजारविन्दवदिति। अत्र चारविन्दे पक्षे गगनीयत्वं पक्षतावच्छेदकं नास्तीत्यरविन्दत्वं हेतुराश्रयासिद्धः। एतज्ज्ञानं परामर्शप्रतिबन्धकम्। अरविन्दे गगनीयत्वं नास्तीति ज्ञाने सुरभित्वव्याप्यारविन्दवद्गगनारविन्दमिति परामर्शासंभवात्। एतस्यारविन्दे गगनीयत्वसंबन्धावगाहित्वात्। पक्षनिष्ठाभावप्रतियोगी स्वरूपासिद्धः। यथा ह्रदो द्रव्यं धूमादिति। अत्र च पक्षे ह्रदे धूमस्याभावोऽस्तीति धूमो हेतुः स्वरूपासिद्धः। एतज्ज्ञानमपि परामर्शप्रतिबन्धकम्। ह्रदे धूमो नास्तीति ज्ञाने सति द्रव्यत्वव्याप्यधूमवान्ह्रद इति परामर्शासंभवात्। एतस्य ह्रदे धूमसंबन्धावगाहित्वात्। व्याप्यतावच्छेदकाभाववान्हेतुर्व्याप्यत्वासिद्धः। यथा पर्वतो वह्निमान्काञ्चनमयधूमादिति। अत्र च धूमे व्याप्यत्वावच्छेदकत्वेनाभिमतं काञ्चनमयत्वं नास्तीति धूमो हेतुर्व्याप्यत्वासिद्धः। एतज्ज्ञानमपि परामर्शप्रतिबन्धकम्, धूमे काञ्चनमयत्वं नास्तीति ज्ञाने सति वह्निव्याप्यकाञ्चनमय-

धूमवान्पर्वत इति परामर्शासंभवात्, एतस्य धूमे काञ्चनमयत्वसंबन्धावगाहित्वात्। साध्याभाववत्पक्षको बाधितः, यथा वह्निरनुष्णः, पदार्थत्वाज्जलवदिति। अत्र च वह्नौ पक्षेऽनुष्णत्वाभावस्योष्णत्वस्य त्वगिन्द्रियेण निश्चयात्पदार्थत्वं हेतुर्बाधितः। एतज्ज्ञानं साक्षादनुमितिप्रतिबन्धकम्। वह्नावनुष्णत्वं नास्तीति ज्ञाने सति वह्निरनुष्ण इत्यनुमितेरसंभवात्तदभावलौकिकनिर्णयस्य तद्वत्ताज्ञाने प्रतिबन्धकत्वात्। इति हेत्वाभासाः॥

ननूपाधेरपि हेतुदोषत्वात्सोपाधिकोऽपि हेत्वाभासोऽस्तीति कथं पञ्चैव त इति चेन्न, व्यभिचारादिज्ञानस्यैवोपाधिज्ञानस्यानुमितितत्करणान्यतरप्रतिबन्धकताभावेनोपाधेर्हेतुदोषत्वाभावात्। कथं तर्हि वाय्वनुमान उपाधिरुपन्यस्यत इति चेत्, व्यभिचारज्ञानप्रयोजकत्वेन तत्र तदुपन्यासः। अथ कोऽयमुपाधिरिति चेदुच्यते—साध्यव्यापकत्वे सति साधनाव्यापक उपाधिः। यथा धूमवान्वह्नेरित्यत्रार्द्रेन्धनम्। भवति च तत्साध्यस्य धूमस्य व्यापकम्, यत्र यत्र धूमस्तत्र तत्रार्द्रेन्धनमिति सत्त्वात्। भवति च साधनस्य वह्नेरव्यापकं यत्र वह्निस्तत्रार्द्रेन्धनमित्यसत्त्वात्। तप्तायःपिण्डे वह्निसत्त्वेऽप्यार्द्रेन्धनाभावात्। एवं यागीया पशुहिंसाऽधर्मसाधनम्, हिंसात्वात्। क्रतुबाह्यहिंसावदित्यत्र निषिद्धत्वमुपाधिः। भवति च तदधर्मसाधनस्य साध्यस्य व्यापकं यत्र यत्राधर्मसाधनत्वं तत्र तत्र निषिद्धत्वमिति सत्त्वात्साधनत्वस्य हिंसात्वस्याव्यापकं यत्र यत्र हिंसात्वं तत्र तत्र निषिद्धत्वमित्यसत्त्वात्। पक्षीकृतहिंसायां हिंसात्वसत्त्वेऽपि निषिद्धत्वस्यासत्त्वात्। एवं गर्भस्थो मित्रातनयः श्यामो मित्रातनयत्वाद्दृश्यमानमित्रातनयषट्कवदित्यत्र शाकपाकजत्वमुपाधिः। न च श्यामत्वस्य काकादौ सत्त्वे शाकपाकजत्वाभावात्साध्याव्यापकत्वं काकादिव्यावृत्तश्यामत्वस्यैवात्र साध्यवत्वात्। इत्यनुमाननिरूपणम्॥

अथोपमानं निरूप्यते—तत्रोपमितिकरणमुपमानम्। तच्च सादृश्यज्ञानात्मकम्। उपमितित्वजातिमत्युपमितिः। कथमियमुत्पद्यत इति चेदुच्यते। गवयमजानन्कश्चिन्नागरिकः कंचिद्वनेचरं कीदृशो गवयपदवाच्य इति पृ-

च्छति । ततस्तेनोक्तो गोसदृशो गवयपदवाच्य इत्युत्तरितः स कदाचिद्वनं गतो गोसदृशं पिण्डं पश्यन्प्रागुक्तातिदेशवाक्यार्थं स्मृत्वासौ गवयपदवाच्य इति प्रतिपद्यते सोपमितिः । अत्र गोसदृशज्ञानं करणम्, अतिदेशवाक्यार्थस्मरणं व्यापारः । इत्युपमाननिरूपणम् ॥

अथ शब्दो निरूप्यते—शाब्दप्रमाकरणज्ञानविषयः शब्दः । यथा नदीतीरे पञ्च फलानि सन्तीत्यादि । वाक्यार्थगोचरं यथार्थज्ञानं शाब्दप्रमा । अत्र पदज्ञानं करणम्, पदजन्यपदार्थोपस्थितिर्व्यापारः । पदोपस्थितानां मिथः संगो वाक्यार्थः । पदसमूहो वाक्यम् । अर्थवाचकं पदम् । तद्द्विविधम्—मुख्यगौणभेदात् । यच्छक्तिवृत्त्या यमर्थमुपस्थापयति, तत्तस्मिन्नर्थे मुख्यम् । तथा गोघटादिव्यक्त्युपस्थापकं गोघटादिपदम् । अस्माच्छब्दादयमर्थो बोद्धव्य इत्याकारकोऽनादिसंकेतः शक्तिः । यल्लक्षणावृत्त्या यमर्थमुपस्थापयति, तत्तस्मिन्नर्थे गौणं लाक्षणिकमित्युच्यते । यथा गङ्गायां घोष इत्यत्र तीरोपस्थापकं गङ्गापदम् । शक्यसंबन्धो लक्षणा । यथा गङ्गापदशक्यप्रवहज्जलौघस्य तीरे संयोगसंबन्धो गङ्गापदलक्षणा । तस्य च शब्दस्याकाङ्क्षायोग्यतासंनिधयः सहकारिणः । यस्य पदस्य येन पदेन विनान्वयानुभवजनकत्वं नास्ति, तस्य पदस्य तेन पदेन समभिव्याहारादाकाङ्क्षा । घटमानयेत्यादौ कारकपदस्य क्रियापदेन विना घटकर्मकमित्यन्वयानुभवजनकत्वाभावात्कारकपदस्य क्रियापदेन सहाकाङ्क्षा । एव क्रियापदस्य कारकपदेनापि सह बोध्या । अत एव गौरश्वः पुरुषो हस्तीत्यादौ नान्वयबोधः, आकाङ्क्षाविरहात् । एकपदार्थेऽपरपदार्थसंसर्गो योग्यता । यथा पयसा सिञ्चतीत्यादौ पयः पदार्थे सेकसंसर्गस्य कार्यकारणभावलक्षणस्य सत्त्वाद्योग्यता । अत एव वह्निना सिञ्चतीत्यादौ नान्वयबोधः, योग्यताविरहात् । पदानामव्यवधानं संनिधिः । यथा गामानयेत्यादौ पदानामविलम्बेनोच्चारणात्संनिधिः । अत एवैकैकशः प्रहरे प्रहरेऽसहोच्चारिते गामानयेत्यादौ नान्वयबोधः, संनिधेरभावात् । सोऽयं शब्दस्त्रिविधः, विधिनिषेधार्थवादभेदात् । तत्र प्रवृत्तिपरं वाक्यं विधिः । यथा ज्योतिष्टोमेन स्वर्गकामो यजेत,

ओदनकामस्तण्डुलं पचेतेत्यादि । ज्योतिष्टोमनामको यागः स्वर्गरूपेष्टसाधनम्, तण्डुलकर्मकपाक ओदनरूपेष्टसाधनमित्युभयवाक्यार्थः । यजेत पचेतेत्यादिविधिप्रत्ययेनेष्टसाधनत्वोपस्थापनात् । निवृत्तिपरं वाक्यं निषेधः । यथा न कलञ्जं भक्षयेदिति । कलञ्जभक्षणं नेष्टविशेषसाधनमित्यर्थः । इष्टविशेषश्चात्र पापानुत्पत्तिरेव । तथैव वाक्यतात्पर्यात् । विधिनिषेधभिन्नः शब्दोऽर्थवादः । यथादित्यो यूपोऽग्निर्हिमस्य भेषजम्, वज्रहस्तः पुरंदर इत्यादि । स चायं शब्दो लोके वेदे च समानः । इयांन्तु विशेषः किंचिदेव लौकिकं वाक्यं प्रमाणं यदाप्तोक्तं वेदवाक्यं तु सर्वमपि प्रमाणम्, परमाप्तेन भगवता कृतत्वात् । इति शब्दनिरूपणम् ॥

अर्थापत्तिस्तु न प्रमाणान्तरम् । पीनो देवदत्तो दिवा न भुङ्क्त इति दृष्टे श्रुते वा दिवाऽभोजिनो रात्रिभोजनमन्तरेण पीनत्वमनुपपन्नमिति ज्ञानानन्तरं देवदत्तो रात्रौ भुङ्क्त इति निर्णीयते, तस्य व्यतिरेकिसाध्यत्वात् । तथा हि । देवदत्तो रात्रौ भुङ्क्ते, दिवाऽभुञ्जानत्वे सति पीनत्वात् । यस्तु रात्रौ न भुङ्क्ते, स दिवाऽभुञ्जानत्वे सति पीनोऽपि न भवति । यथा दिवा रात्रौ चाभोजीति । अर्थापत्तिरित्यपि व्यतिरेकिण एव नामान्तरमिति । घटोपलब्धौ घटाभावाग्रहात्प्रतियोग्यनुपलब्धिरभावग्रहे प्रत्यक्षस्यैव सहकारिणी, न तु प्रमाणान्तरं प्रत्यक्षेणैवाभावग्रहोपपत्तेः । अन्यथेह घटो नास्तीति निर्णयानन्तरमिह घटाभावं साक्षात्करोमीति प्रतीत्यनुपपत्तेः ॥

प्रामाण्यं स्वतो ग्राह्यं परतो वेति विचार्यते । दूरात्प्रत्यक्षेण जलादिज्ञाने जाते तत्र स्वत एव यथार्थज्ञानत्वरूपप्रामाण्यमवधार्य जलार्थी प्रवर्तते, ज्ञानग्रहे तद्गतप्रामाण्यस्यापि ग्रहात्प्रामाण्यस्य यावज्ज्ञानग्राहकग्राह्यत्वरूपस्वतस्त्वोपगमादिति मीमांसकाः, तन्न । स्वत एव प्रामाण्यग्रहे ज्ञानग्रहानन्तरं क्वचिज्जातं मे जलज्ञानं प्रमा न वेति प्रामाण्यसंशयो न स्यात्, निश्चिते संशयायोगात् । न च संशयस्थले ज्ञानग्रहोऽपि नास्तीति वाच्यम्, ज्ञानाग्रहे ज्ञानधर्मिकप्रामाण्यतदभावकोटिकसंशयानुपपत्तेः, संशये धर्मिज्ञानस्य हेतुत्वात् । न हि पुरोवर्तिन्युच्चैस्तरे धर्मिण्यज्ञातेऽयं स्थाणुः पुरुषो वेति

संशयो भवति । तस्माज्ज्ञाने परत एव प्रामाण्यमवधार्यते । तथा हि । अनभ्यासदशापन्नजलादिज्ञाने जाते तत्र प्रामाण्यसंशये सत्यपि पुरुषः प्रवर्तते । ततो जलप्रतिलम्भे सति जातं मे जलज्ञानं प्रमा, समर्थप्रवृत्तिजनकत्वात् । यत्प्रमा न भवति, तत्समर्थप्रवृत्तिजनकं न भवति । यथा जलभ्रम इति व्यतिरेकेणानभ्यासदशापन्नज्ञानप्रामाण्यं निश्चीयत इति । अभ्यासदशापन्नजलादिज्ञानेषु प्रवृत्तेः पूर्वमप्यन्वयिना प्रामाण्यमवधार्यते । तत्रैव द्वितीयादिजलज्ञानं प्रमा समर्थप्रवृत्तिजनकजातीयत्वादाद्यजलज्ञानवदिति ॥

धर्मप्रभवं सुखम् । अधर्मप्रभवं दुःखम् ॥ इच्छात्वसामान्यवतीच्छा । सापि द्वेधा—फलविषयिणी तत्साधनविषयिणी चेति । सुखं दुःखाभावश्च फलम् । तदिच्छां प्रति फलज्ञानमात्रं कारणम् । साधनेच्छां प्रति तु फलसाधनताज्ञानं कारणम् ॥ द्वेषत्वसामान्यवान्प्रज्वलनात्मको वा द्वेषः । स द्विविधः—दुःखविषयस्तत्साधनविषयश्च । दुःखद्वेषं प्रति दुःखज्ञानमात्रं कारणम्, साधनद्वेषं प्रति तु दुःखसाधनताज्ञानं कारणम् ॥ प्रयत्नत्वसामान्यवानुत्साहरूपश्च प्रयत्नः । स त्रिविधः—प्रवृत्तिनिवृत्तिजीवनयोनिभेदात् । चिकीर्षाजन्यो यत्नः प्रवृत्तिः । द्वेषसाधनताज्ञानजन्यो यत्नो निवृत्तिः । श्वासप्रश्वासहेतुर्यत्नो जीवनयोनिः । स चातीन्द्रियः ॥ बुद्धीच्छाप्रयत्ना आत्ममात्रसमवेताः । तत्रेश्वरगता नित्याः, जीवगता अनित्याः ॥ आद्यपतनासमवायिकारणं गुरुत्वम् । तच्च भूजलमात्रवृत्ति ॥ आद्यस्यन्दनासमवायिकारणं द्रवत्वम् तद्द्विविधम्—सांसिद्धिकं नैमित्तिकं चेति । अग्निसंयोगानपेक्ष्यं द्रवत्वं सांसिद्धिकम् । तज्जलमात्रवृत्ति । अग्निसंयोगापेक्ष्यं द्रवत्वं नैमित्तिकम् । तद्घृतादिरूपायां भुवि सुवर्णादिरूपे च तेजसि तदुभयत्रैव वह्निसंयोगाद्द्रवत्वोत्पत्तेः ॥ स्नेहत्वजातिमांश्चिक्कणतारूपः स्नेहः । स च जलमात्रवृत्तिः । चणकचूर्णादिव्यङ्ग्यः । घृततैलादौ स्नेहोपलम्भस्तु जलोपाधिकः ॥ गुरुत्वद्रवत्वस्नेहाः परमाणुगता नित्याः, कार्यगता अनित्याः ॥ श्रोत्रग्राह्यो गुणः शब्दः । स त्रिविधः—संयोगजो विभागजः शब्दजश्चेति ।

भेर्यामभिहन्यमानायां यः शब्दः स संयोगजः। तत्र भेर्याकाशसंयोगोऽसमवायिकारणम्, भेरीदण्डसंयोगो निमित्तकारणम्, वंश उत्पाट्यमाने यश्चटचटाशब्दः स विभागजः। तत्र वंशदलद्वयाकाशविभागोऽसमवायिकारणम्, वंशदलद्वयविभागो निमित्तकारणम्। वीचीतरंगन्यायेन कदम्बगोलकन्यायेन वा ये द्वितीयादयः शब्दास्ते शब्दजाः। तत्रोत्तरोत्तरशब्दे पूर्वपूर्वशब्दोऽसमवायिकारणम्, अनुकूलवातादिकं निमित्तकारणम्। पुनरपि शब्दो द्विविधः—वर्णात्मको ध्वनिश्च। ताल्वादिव्यापारप्रभवो वर्णात्मकः। मृदङ्गादिप्रभवो ध्वनिः। सर्वोऽपि शब्दः आकाशमात्रसमवेतः॥ जीवात्मसमवेतबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाः शब्दाश्च द्विक्षणावस्थायिनस्तृतीयक्षणे नश्यन्ति। योग्यविभुविशेषगुणानां स्वद्वितीयक्षणोत्पन्ननाश्यत्वनियमात्॥ विहितक्रियासाध्यो धर्मः, निषिद्धक्रियासाध्योऽधर्मः। एतौ जीवमात्रसमवेतौ भोगप्रायश्चित्तादिनाश्यौ च॥ संस्कारत्वजातिमान्संस्कारः। स त्रिविधः—वेगः स्थितिस्थापको भावना चेति। वेगत्वजातिमान्वेगः। समूर्तद्रव्यमात्रसमवेतः। आश्रयपूर्वावस्थापादकः संस्कारः स्थितिस्थापकः। स पृथिव्यादिचतुष्टयवृत्तिः। आकृष्टतरुशाखादौ पुनस्तत्स्थानस्थितिं जनयति। इमौ द्वौ क्रियाजन्यौ स्वजन्यक्रियानाश्यौ च। पूर्वानुभवजन्यः स्मृतिहेतुः संस्कारो भावना। स जीवमात्रवृत्तिः। त्रिविधसंस्कारोऽनित्य एव। इति गुणनिरूपणम्॥

ऊर्ध्वदेशसंयोगहेतुः कर्मोत्क्षेपणम्। अधोदेशसंयोगहेतुः कर्मापक्षेपणम्। स्वसंनिकृष्टसंयोगहेतुः कर्माकुञ्चनम्। स्वविप्रकृष्टसंयोगहेतुः कर्म प्रसारणम्। अन्यत्सर्वं कर्म गमनम्। पञ्चविधमपि कर्म मूर्तद्रव्यमात्रसमवेतमनित्यमेव, उत्तरसंयोगात्कदाचिदाश्रयनाशाच्च नश्यति। इति कर्मनिरूपणम्॥

अधिकदेशवृत्ति सामान्यं परम्। यथा सत्ताया द्रव्यादित्रितयवृत्तित्वेनेतरसामान्यापेक्षयाधिकदेशवृत्तित्वात्। अल्पदेशवृत्ति सामान्यमपरम्। यथा द्रव्यत्वगुणत्वकर्मत्वादि, सत्तापेक्षयाल्पदेशवृत्तित्वात्। पुनःसामान्यं

द्विविधम्—जातिरूपमुपाधिरूपं च । साक्षात्संबद्धं सामान्यं जातिरूपम् । यथा सत्ताद्रव्यत्वादि । परम्परासंबद्धं सामान्यमुपाधिः । यथा प्रमेयत्वज्ञेयत्वादिर्दण्डित्वकुण्डलित्वादिश्च । प्रमात्वमेव हि परम्परासंबन्धेन घटादिनिष्ठं प्रमेयत्वमित्यादि बोध्यम् । इति सामान्यनिरूपणम् ॥

नित्यद्रव्यवृत्तिविशेषाणां सामान्यस्य च विशेषतो विभागाभावात्सामान्यलक्षणमेव पूर्वोक्तमवसेयम् । परंतु विशेषानभ्युपगमे समानजातिगुणक्रियावतां परमाणूनां परस्परव्यावृत्तिबुद्धिर्न स्यात्, तत्रेष्टापत्तौ योगिनोऽपि तादृशपरमाणूनां ज्ञानसंकरः स्यादिति । एवं युतसिद्धयोः संयोग इवायुतसिद्धयोः समवायोऽवश्यः, ययोर्द्वयोर्मध्ये एकमविनश्यदपराश्रितमेवावतिष्ठते, तावयुतसिद्धौ । एतौ पञ्चविधाववयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिव्यक्ती विशेषनित्यद्रव्ये चेति । अवयव्यादयो ह्यविनश्यन्तोऽवयवाद्याश्रिता एवावतिष्ठन्ते । अवयवादिनाशानन्तरं विनश्यन्तस्तु क्षणमात्रं निराश्रिता एवावतिष्ठन्ते । इति विशेषसमवाययोर्निरूपणम् ॥

तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकोऽभावोऽन्योन्याभावः । स च घटः पटो नेत्यादिप्रत्ययप्रसिद्धः । अन्योन्याभावभिन्नोऽभावः संसर्गाभावः । स त्रिविधः—प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावश्चेति । उत्पत्तेः प्राक्समवायिकारणे कार्यस्य संसर्गाभावः प्रागभावः । स चेह कपाले घटो भविष्यतीति प्रत्ययप्रसिद्धः । उत्पत्तेरनन्तरं समवायिकारणे कार्यस्य संसर्गाभावः प्रध्वंसः । स चेह कपाले घटो ध्वस्त इति प्रत्ययप्रसिद्धः । त्रैकालिकः संसर्गाभावोऽत्यन्ताभावः । स चेह भूतले घटो नास्तीत्यादिप्रत्ययसिद्धः । एवमन्येषामत्रैवान्तर्भावः । यथान्धकारस्यालोकाभावे यत्रालोको नास्ति तत्रैवान्धकारव्यवहारात् ॥

लक्षणदोषाणामव्याप्त्यतिव्याप्त्यसंभवानां तु यथासंभवं हेत्वाभासेष्वन्तर्भावः । लक्ष्यैकदेशे लक्षणस्यावर्तनमव्याप्तिः । यथा शिखासूत्रवान्ब्राह्मण इत्यस्य संन्यासिन्यव्याप्तिः, तस्य शिखासूत्रवत्त्वाभावात् । अलक्ष्ये लक्षणगमनमतिव्याप्तिः । यथा मनुष्यो ब्राह्मण इति लक्षणस्य शूद्रेऽतिव्याप्तिः,

तस्यापि मनुष्यत्वात् । लक्ष्ये क्वापि लक्षणस्यावर्तनमसंभवः । यथा शुण्डादण्डवान्ब्राह्मण इति लक्षणस्यासंभवः, कस्यापि ब्राह्मणस्य शुण्डादण्डाभावात् । एतद्दोषरहितं तल्लक्षणम् । विशुद्धमातापितृजन्यत्ववान्ब्राह्मण इति । विशुद्धत्वं च षट्कर्माधिकारवत्त्वम् ॥

इयता प्रबन्धेन सर्वेषां पदार्थानामुद्देशलक्षणे कृते बालानुपयोगाच्च परीक्षा न कृता । लक्ष्यतावच्छेदकमात्रेण लक्ष्यसंकीर्तनमुद्देशः । असाधारणधर्मो लक्षणम्, उद्देशलक्षणयोरुपपत्त्यनुपपत्त्यन्यतरफलको विचारः परीक्षा । ननु निःप्रयोजनमेतत्पदार्थनिरूपणं तज्जन्यपदार्थतत्त्वज्ञानस्य सुखदुःखाभावतत्साधनेतरत्वेन प्रयोजनत्वाभावादिति चेन्न, पदार्थतत्त्वज्ञानस्यात्मतत्त्वज्ञानद्वारा मोक्षसाधनत्वात् । आत्यन्तिकदुःखध्वंसो मोक्षः । स च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनदुःखध्वंसः । संसारकालीनदुःखध्वंसस्य मोक्षत्ववारणाय कालीनान्तं दुःखध्वंसविशेषणम्, अस्मदीयदुःखसमानकालीनशुकमोक्षेऽव्याप्तिवारणाय स्वसमानाधिकरणेतिदुःखविशेषणमिति सर्वं शिवम् ॥

विद्वद्भास्करशर्मा यो बालव्युत्पत्तिसिद्धये<br>
यथाकणादसिद्धान्तमकरोत्तर्ककौमुदीम् ॥

श्रीवासुदेवं सुरवैरिभङ्गं रमाधरालिङ्गितसुन्दराङ्गम् ॥<br>
पादाब्जसंभूतपवित्रगङ्गं नमामि तं वारितदोषसङ्गम् ॥

इति लौगाक्षिभास्करशर्मविरचिता तर्ककौमुदी समाप्ता ।



# उपोद्घातः।

" विनिहतदोषः सततं भव्यव्रजवारिजातकृतबोधः ।
गोभिः सकलपदार्थप्रकटयिता जयति वीररविः ॥"

अध्यात्मकल्पद्रुमाभिधमिदं ग्रन्थरत्नमार्हतदर्शनप्रमुखतत्त्वप्रतिपादकत्वात् प्रसादगुणशालित्वाच्च शतार्थिकश्रीसोमप्रभसूरीणां सूक्तिमुक्तावल्याः शोभामनुहरति । उपदेशरत्नाकरनामा बृहत्कायोऽन्योऽपि ग्रन्थो मागधीभाषायां व्यरच्येतत्कर्त्रा ।

ग्रन्थस्यास्य निर्माता तपागच्छनायकः श्रीमुनिसुन्दरसूरिः श्रीविक्रमाब्दे १४३६ स्वजन्मना महीमण्डलं मण्डयामासेति-श्रूयते । पड्वर्षदेशीय एव पूर्वभवाचरितशुभकर्मसंस्कारपरिणामादुत्पन्नवैराग्यः श्रमणदीक्षामग्रहीत् । देहावसानं च १५०३ वत्सरे जातम् ।

अध्यात्मकल्पद्रुमस्योपरि श्रीरत्नचन्द्रगणिविद्यासागरगणिश्रीधनविजयगणिप्रभृतीनां टीकाः सन्तीति ज्ञायते परन्तु तासां मध्यात् श्रीधनविजयगणिविरचिता अधिरोहणी एव मया प्राप्ता । अस्ति च "अध्यात्मकल्पद्रुमशास्त्रभावफलाप्तयेऽसावधिरोहिणीव । व्याख्या पदस्थानसुखाधिगम्या * * * ॥" अत एव तत्सारभूता विषमपदटिप्पणी संयोजिता मूलेन सह ।

टीकाकर्तृसमयनिर्णयविषये टीकान्तिमलेखे "तपागच्छनायकश्रीमुनिसुन्दरसूरिनिर्मितस्याध्यात्मकल्पद्रुमस्य सकलशास्त्रारविन्दप्रद्योतनमहोपाध्यायश्रीकल्याणविजयगणिशिष्योपाध्यायश्रीधनविजयगणिविरचितायामधिरोहणीटीकायां साम्यसर्वस्वनाम्नी षोडशी पदपद्धतिः" इत्येव लभ्यते ।

जैनाचार्यश्रीकमलविजयसूरिभिः कृपया दत्तस्य हस्तलिखितस्य सटीकस्य पुस्तकस्यानुरोधेन प्रकरणरत्नाकरनाम्नि जैनधर्मग्रन्थसङ्ग्रहे मुद्रितस्य आदर्शपुस्तकस्य चाधारेण ग्रन्थरत्नस्यास्य संशोधनमकारि यथामति । "श्लोकोवरं परमतत्वपथप्रकाशी न ग्रन्थकोटिपठनं जनरञ्जनाय । सञ्जीवनीति वरमौषधमेकमेव व्यर्थश्रमप्रजननो न तु मूलभारः ॥" इति हृदयप्रदीपोक्तिं मनसि निधाय शास्त्रसारभूतस्यास्य पठनपाठनाभ्यां ममोत्साहं वर्द्धयिष्यन्ति कृपालवः साधव इत्यहमाशंसे । उक्तं हि कविकुलगुरुणा "क्लेशः फलेन हि पुनर्नवतां विधत्ते" इति

सज्जनसेवाभिलाषी,

शिवरामः ।

# अनुक्रमणिका.





## परिशिष्ट.

श्रीरत्नाकरसूरिविरचिता

# रत्नाकरपञ्चविंशतिका।

(श्रीवीतरागस्तुतिः।)

श्रेयःश्रियां मंगलकेलिसद्म नरेन्द्रदेवेन्द्रनतांघ्रिपद्म ।
सर्वज्ञ सर्वातिशयप्रधान[1] चिरं जय ज्ञानकलानिधान ॥ १ ॥

जगत्त्रयाधार कृपावतार दुर्वारसंसारविकारवैद्य ।
श्रीवीतराग त्वयि मुग्धभावाद् विज्ञ प्रभो विज्ञपयामि किंचित् ॥ २ ॥

किं बाललीलाकलितो न बालः पित्रोः पुरो जल्पति निर्विकल्पः[2] ।
तथा यथार्थं कथयामि नाथ निजाशयं सानुशयस्तवाग्रे ॥ ३ ॥

दत्तं न दानं परिशीलितं च न शालि शीलं न तपोऽभितप्तम् ।
शुभो न भावोऽप्यभवद्भवेऽस्मिन् विभो मया भ्रांतमहो मुधैव ॥ ४ ॥

दग्धोऽग्निना क्रोधमयेन दष्टो दुष्टेन लोभाख्यमहोरगेण ।
ग्रस्तोऽभिमानाजगरेण मायाजालेन बद्धोऽस्मि कथं भजे त्वाम् ॥ ५ ॥

कृतं मयाऽमुत्र हितं न चेह लोकेऽपि लोकेश सुखं न मेऽभूत् ।
अस्मादृशां केवलमेव जन्म जिनेश जज्ञे भवपूरणाय ॥ ६ ॥

मन्ये मनो यन्न मनोज्ञवृत्त त्वदास्यपीयूषमयूखलाभात् ।
द्रुतं महानंदरसं कठोरमस्मादृशां देव तदश्मतोऽपि ॥ ७ ॥

त्वत्तः सुदुष्प्रापमिदं मयाप्तं रत्नत्रयं[3] भूरिभवभ्रमेण ।
प्रमादनिद्रावशतो गतं तत् कस्याग्रतो नायक पूत्करोमि[4] ॥ ८ ॥

वैराग्यरंगः परवंचनाय धर्मोपदेशो जनरंजनाय ।
वादाय विद्याध्ययनं च मेऽभूत् कियद् ब्रुवे हास्यकरं स्वमीश ॥ ९ ॥

परापवादेन मुखं सदोषं नेत्रं परस्त्रीजनवीक्षणेन ।
चेतः परापायविचिंतनेन कृतं भविष्यामि कथं विभोऽहम् ॥ १० ॥

---

१ ज्ञानवागपायागमपूजातिशयश्रेष्ठ । २ विगतशंकः । वक्तव्यावक्तव्यविवेकशून्य इत्यर्थः । ३ ज्ञानदर्शनचारित्ररूपम् । ४ दुःखं निवेदयामि ।

विडंवितं यत्स्मरघस्मरार्तिदशावशात् स्वं विषयांधलेन ।
प्रकाशितं तद्भवतो ह्रियैव सर्वज्ञ सर्वं स्वयमेव वेत्सि ॥ ११ ॥
ध्वस्तोऽन्यमंत्रैः परमेष्टिमंत्रः कुशास्त्रवाक्यैर्निहतागमोक्तिः ।
कर्तुं वृथा कर्म कुदेवसंगाद् अवांछि हीं नाथ मतिभ्रमो मे ॥ १२ ॥
विमुच्य दृग्लक्ष्यगतं भवंतं ध्याता मया मूढधिया हृदंतः ।
कटाक्षवक्षोजगभीरनाभीकटीतटीयाः सुदृशां विलासाः ॥ १३ ॥
लोलेक्षणावक्त्रनिरीक्षणेन यो मानसे रागलवो विलग्नः ।
न शुद्धसिद्धांतपयोधिमध्ये धौतोऽप्यगात्तारक कारणं किम् ॥ १४ ॥
अंगं न चंगं न गणो गुणानां न निर्मलः कोऽपि कलाविलासः ।
स्फुरत्प्रधानप्रभुता च कापि तथाप्यहंकारकदर्थितोऽहम् ॥ १५ ॥
आयुर्गलत्याशु न पापबुद्धिर्गतं वयो नो विषयाभिलाषः ।
यत्नश्च भैषज्यविधौ न धर्मे स्वामिन् महामोहविडंबना मे ॥ १६ ॥
नात्मा न पुण्यं न भवो न पापं मया विटानां कटुगीरपीयं ।
अधारि कर्णे त्वयि केवलार्के परिस्फुटे सत्यपि देव धिङ् माम् ॥ १७ ॥
न देवपूजा न च पात्रपूजा न श्राद्धधर्मश्च न साधुधर्मः ।
लब्ध्वापि मानुष्यमिदं समस्तं कृतं मयारण्यविलापतुल्यम् ॥ १८ ॥
चक्रे मयासत्स्वपि कामधेनुकल्पद्रुचिंतामणिषु स्पृहार्तिः ।
न जैनधर्मे स्फुटशर्मदेऽपि जिनेश मे पश्य विमूढभावम् ॥ १९ ॥
सद्भोगलीला न च रोगकीला धनागमो नो निधनागमश्च ।
दारा न कारा नरकस्य चित्ते व्यचिंति नित्यं ममकेऽधमेन ॥ २० ॥

---

१ विद्युत्पत्रपीतान्धाल्लः । ८.२.१७३ एभ्यः स्वार्थे लो वा भवति । अंधलो । अंधो । इति प्राकृतसिद्धहेमचन्द्रे श्रीहेमचन्द्रसूरिः । २ पञ्चपरमेष्टिमंत्रः—ओम् नमो अरिहंताणं । नमो सिद्धाणं । नमो आयरियाण । नमो उवज्झायाण । नमो साहूणं । ३ चारु । चंगं चारु इति देशीनाममालायां । ४ श्रद्धया युक्तः श्राद्धः श्रावक इत्यर्थस्तस्य धर्मः । प्राणातिपात-विरमणव्रत मृषावाद वि० अदत्तादान वि० मैथुन वि० अनर्थदण्ड वि० परिग्रहपरिमाणव्रत दिशापरिमाणव्रत भोगोपभोगपरिमाणव्रत सामायिकव्रत देशावकाशिकव्रत पोषधव्रत अतिथिसंविभागव्रतलक्षणो धर्मः । ५ क्षान्तिमार्दवार्जवलोभपरित्यागसंयमसत्यशौचाकिञ्चनताब्रह्मचर्यलक्षणो धर्मः। ६ कीलोऽभितापः। कीलः कीला प्रकीर्तिता इति द्विरूपकोपे पुरुषोत्तमदेवः । ७ ममए इति अस्मदस्तृतीयैकवचनस्य रूपमिति आचार्यहेमचन्द्रः । मयकाधमेन इति आदर्शपुस्तकस्थः पाठोऽसमीचीनः । स तु लेखकप्रमादज इति भाति । ममएऽधमेन

स्थितं न साधोर्हृदि साधुवृत्तात् परोपकारान्न यशोऽर्जितं च ।
कृतं न तीर्थोद्धरणादिकृत्यं मया मुधा हारितमेव जन्म ॥ २१ ॥

वैराग्यरंगो न गुरूदितेषु न दुर्जनानां वचनेषु शांतिः ।
नाध्यात्मलेशो मम कोऽपि देव तार्यः कथंकारमयं भवाब्धिः ॥ २२ ॥

पूर्वे भवेऽकारि मया न पुण्यमागामिजन्मन्यपि नो करिष्ये ।
यदीदृशोऽहं मम तेन नष्टा भूतोद्भवद्भाविभवत्रयीश ॥ २३ ॥

किं वा मुधाहं बहुधा सुधाभुक्पूज्य त्वदग्रे चरितं स्वकीयं ।
जल्पामि यस्मात् त्रिजगत्स्वरूपनिरूपकस्त्वं कियदेतदत्र ॥ २४ ॥

दीनोद्धार धुरंधरस्त्वदपरो नास्ते मदन्यः कृपा-
पात्रं नात्र जने जिनेश्वर तथाप्येतां न याचे श्रियं ।
किं त्वर्हन्निदमेव केवलमहो सद्बोधिरत्नं शिव-
श्रीरत्नाकर मंगलैकनिलय श्रेयस्करं प्रार्थये ॥ २५ ॥

---

इत्यस्य स्थाने मयकाधमेन इति पाठे गृहीते "छगलमपनयतः क्रमेलकप्रवेश"न्यायो दुर्वार एव । "व्यचिन्ति नित्यं हि मयाधमेन" इति पाठे सर्वमनवद्यम् ।

१ "धर्माख्याने श्मशाने च रोगिणां या मति र्भवेत् । यदि सा निश्चला बुद्धिः को न मुच्येत बन्धनात् ॥" २ पूर्वस्मिन् । ३ भूतवर्तमानभविष्यज्जन्मत्रयी ।

श्रीमुनिसुन्दरसूरिविरचितः

# अध्यात्मकल्पद्रुमः ।

( अधिरोहणीटिप्पणीसहितः )

---

### मङ्गलाचरणम् ।

जय[1]श्रीरान्तरा[3]रीणां लेभे येन प्रशान्तितः ।
तं श्रीवीर[4]जिनं नत्वा रसः शान्तो विभा[5]व्यते ॥ १ ॥

### शान्तरसमाहात्म्यम् ।

सर्वमङ्गलनिधौ हृदि यस्मिन् सङ्गते निरुपमं सुखमेति ।
मुक्तिशर्म च वशीभवति द्राक् तं बुधा भजत शान्तरसेन्द्रम् ॥ २ ॥

### शास्त्रोपदेशसङ्ग्रहः ।

[6]समतैकलीनचित्तो ललनापत्य[7]स्वदेहममतामुक् ।
विषयकर्षायाद्यवशः शास्त्र[8]गुणैर्दमितचेतस्कः ॥ ३ ॥

---

१ अथायं श्रीमान् शान्तनामा रसाधिराजः सकलागमादिसुशास्त्रार्णवोपनिषद्भूतसुधारसायमान ऐहिकामुष्मिकानन्तानन्दसन्दोहसाधनतया पारमार्थिकोपदेशतया सर्वरससारभूतत्वात् शान्तरसभावनात्माध्यात्मकल्पद्रुमाभिधानग्रन्थान्तरग्रथननिपुणेन पद्यसन्दर्भेण भाव्यते इति पीठिकाग्रन्थो मूले संनिवेशितो दृश्यते । २ मङ्गलार्थक पदमिदम् । "ये देवतावाचकाः शब्दा ये च भद्रादिवाचकाः । ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा ॥" "मो भूमिस्त्रिगुरुः श्रियं दिशति, यो वृद्धि जल चादिलः ।" इति गणशुद्धिरप्यस्ति । ३ कामक्रोधमानमदहर्षलोभलक्षणवैरिणाम् । ४ श्रिया अष्टमहाप्रातिहार्यरूपया चतुस्त्रिंशदतिशयरूपया वा उपलक्षितः । विशेषेण ईरयति क्षपणाय प्रेरयति अष्टकर्माणि इति वीरः । यदुक्तम्—"विदारयति यत् कर्म तपसा च विराजते । तपोवीर्येण युक्तश्च तस्माद्वीर इति स्मृतः ॥" जयति मारमिति जिनस्तम् । ५ उपदेशादिना परिशीलनालक्षणविभावनविषयीक्रियते । ६ समता रागद्वेषराहित्यम् । समताद्वारं, ललनाममतामोचनद्वारं, अपत्यममतामोचनद्वारं, धनममतामोचनद्वारं, देहम-

वैराग्यशुद्धधर्मा देवादिसतत्त्वविद्विरतिधारी ।
संवरवान् शुभवृत्तिः साम्यरहस्यं भज शिवार्थिन् ॥ ४ ॥

[ युग्मकम् ]

## समताधिकारः ।

चित्तबालक मा त्याक्षीरजस्रं भावनौषधीः ।
यत्त्वां दुर्ध्यानभूता न च्छलयन्ति च्छलान्विषः ॥ ५ ॥

यदिन्द्रियार्थैः सकलैः सुखं स्यान्नरेन्द्रचक्रित्रिदशाधिपानाम् ।
तद्विन्दवत्येव पुरो हि साम्यसुधाम्बुधेस्तेन तमाद्रियस्व ॥ ६ ॥

अदृष्टवैचित्र्यवशाज्जगज्जने विचित्रकर्माशयवाग्विसंस्थुले ।

---

मतामोचनद्वारं, विषयत्यागद्वारं, कषायत्यागद्वारं, शास्त्रद्वारं, चित्तदमनद्वारं, वैराग्यद्वारं, शुद्धधर्मद्वारं, देवतत्त्वद्वारं, विरतिद्वारं, संवरद्वारं, शुभवृत्तिद्वारं, साम्यरहस्यद्वारञ्चेति षोडशोपदेशद्वाराणि । ७ ललना च अपत्यं च स्वं (हिरण्यादि द्रव्यम) च देहश्च ललनापत्यस्वदेहास्तेषु ममता ललनापत्यस्वदेहममता । "द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते ।" तां मुञ्चतीति ममतामुक् । उपपदसमासः । ८ विषयाः (शब्दरूपरसगन्धाख्याः) कषायाः (क्रोधमानमदलोभाः) च ते आदौ येषां ते । तेषामवशः । ९ शास्त्ररूपैर्गुणैः रज्जुभिः । शास्त्रोदितै गुणैः शुभाचरणैश्च ।

१ देवादीनां देवगुरुधर्माणां सतत्वं स्वरूपं वेत्ति इति देवादिसतत्त्ववित् । २ विरतिं सर्वसावद्ययोगनिवृत्तिं धरतीति विरतिधारी । ३ संवरो मिथ्यात्वादिनिरोधोऽस्त्यस्येति संवरवान् । जीवः, अजीवः, पुण्यं, पापं, आस्रवः, संवरः, निर्जरा, बन्धः, मोक्षश्चेति नव तत्त्वानि जैनागमे । ४ शुभा पुण्यानुबन्धिनी वृत्तिरावश्यकादिषु प्रवृत्तिर्यस्येति शुभवृत्तिः । ५ भाव्यते वास्यते वैराग्येणात्मा याभिस्ता भावनाः । "साम्यं स्यान्निर्ममत्वेन तत्कृते भावनाः श्रयेत् । अनित्यतामशरणं भवमेकत्वमन्यताम् ॥ अशौचमास्रवविधिं संवरं कर्मनिर्जरां । धर्मस्वाख्याततां लोकं द्वादशीं बोधिभावनाम् ॥" ६ आर्तरौद्रध्यानान्येव दुष्टव्यन्तरविशेषा इत्यक्षरार्थः । भावार्थस्तु चित्तस्य गम्यागम्यकार्याकार्यहेयोपादेयपरिज्ञानविकलत्वेन बालकरूपता । भावनायाश्च स्थैर्यधैर्याद्यापादकत्वेन औषधिरूपता । दुर्ध्यानानाञ्च पारवश्यापादकत्वेन दौर्गत्योत्पादकत्वेनोन्मादादिजनकत्वेन च भूतरूपता । ७ चक्री—चक्रवर्ती । ८ विन्दुतुल्यं भवति । विशेषणसंगत एवकारोऽयोगं व्यवच्छिनत्ति यथा शंखः पाण्डर एव । विशेष्यसंगत एवकारोऽन्ययोगं व्यवच्छिनत्ति यथा पार्थ एव धनुर्धरः । क्रियासंगत एवकारोऽत्यन्तायोगं व्यवच्छिनत्ति यथा नीलं सरोजं भवत्येव । १० कर्माणि कायव्यापाराः, आशयाश्च मनोव्यापाराः, वाचश्च वाग्व्यापारास्तैरस्वस्थे ।

उदासवृत्तिस्थितचित्तवृत्तयः सुखं भजन्ते[2] यतयः क्षतार्तयः ॥ ७ ॥
विश्वजन्तुषु यदि क्षणमेकं साम्यतो भजसि मानस मैत्रीम् ।
तत्सुखं परममत्र परत्राप्यश्नुषे न यदभूत्तव जातु ॥ ८ ॥
न यस्य मित्रं न च कोऽपि शत्रुर्निजः परो वापि न कश्चनास्ते ।
न चेन्द्रियार्थेषु रमेत चेतः कषायमुक्तं परमः स योगी ॥ ९ ॥
भजस्व मैत्रीं जगदंगिराशिषु प्रमोदमात्मन् गुणिषु त्वशेषतः ।
भवार्तिदीनेषु कृपारसं सदाप्युदासवृत्तिं खलु निर्गुणेष्वपि ॥ १० ॥
मैत्री परस्मिन् हितधीः समग्रे भवेत् प्रमोदो गुणपक्षपातः ।
कृपा भवार्ते प्रतिकर्तुमीहोपेक्षा च माध्यस्थ्यमवार्यदोषे[3] ॥ ११ ॥
चेतनेतरगतेष्वखिलेषु स्पर्शरूपरवगन्धरसेषु ।
साम्यमेष्यति यदा तव चेतः पाणिगं शिवसुखं हि तदात्मन् ॥ १२ ॥
के गुणास्तव यतः स्तुतिमिच्छस्यद्भुतं किमकृथा मदवान् यत् ।
कैर्गता नरकभीः सुकृतैस्ते किं जितः पितृपतिर्यदचिन्तः ॥ १३ ॥
गुणस्तवैर्यो गुणिनां परेषामाक्रोशनिन्दादिभिरात्मनश्च ।
मनः समं शीलति मोदते वा खिद्येत च व्यत्ययतः स वेत्ता ॥ १४ ॥
न वेत्सि शत्रून् सुहृदश्च नैव हिताहिते स्वं न परं च जन्तो ।
दुःखं द्विषन् वाञ्छसि शर्म चैतन्निदानमूढः कथमाप्स्यसीष्टं ॥ १५ ॥

---

१ माध्यस्थ्यम् । २ श्रयन्ते इति पाठान्तरम् । ३ परहितचिन्ता मैत्री परदुःखविनाशिनी तथा करुणा । परसुखतुष्टिर्मुदिता परदोषोपेक्षणमुपेक्षा ॥ इति तुर्यषोडशके श्रीहरिभद्रसूरिः ।

मा कार्षीत् कोऽपि पापानि मा भूत् कोऽपि च दुःखितः ।
मुच्यतां जगदप्येषा मतिर्मैत्री निगद्यते ॥ १ ॥

अपास्ताशेषदोषाणां वस्तुतत्त्वावलोकिनाम् । गुणेषु पक्षपातो यः स प्रमोदः प्रकीर्तितः २
दीनेष्वार्तेषु भीतेषु याचमानेषु जीवितं । प्रतीकारपराबुद्धिः कारुण्यमभिधीयते ॥ ३ ॥
क्रूरकर्मसु निःशंकं देवतागुरुनिन्दिषु । आत्मशंसिषु योपेक्षा तन्माध्यस्थ्यमुदीरितम् ॥४॥
इति योगशास्त्रे श्रीहेमचन्द्रसूरिः ।

इदं श्लोकपंचकं मूले संनिवेशितं दृश्यते ।

४ चेतनाचेतनगतेषु सर्वेष्विष्टानिष्टेषु । ५ गालिप्रदानदोषोद्भावनप्रमुखैः । ६ करोति । ७ हितं आयतिसुखदायि । अहितं आयतिदुःखदायि ।

चापल्यमायानृतवञ्चिका स्त्री संस्कारमोहान्नरकाय भुक्ता ॥ ३६ ॥

निर्भूमिर्विषकन्दली गतदरी व्याघ्री निराह्वो महा-
व्याधिर्मृत्युरकारणश्च ललनाऽनभ्रा च वज्राशनिः ।
बन्धुस्नेहविघातसाहसमृषावादादिसन्तापभूः
प्रत्यक्षापि च राक्षसीति विरुदैः ख्याताऽऽगमे त्यज्यताम् ॥३७॥

अपत्यममत्वमोचनाधिकारः ।

मा भूरपत्यान्यवलोकमानो मुदाकुलो मोहनृपारिणा यत् ।
चिक्षिप्सया नारकचारकेऽसि दृढं निबद्धो निगडैरमीभिः ॥ ३८ ॥

आजीवितं जीव भवान्तरेऽपि वा शल्यान्यपत्यानि न वेत्सि किं हृदि ।
चलाचलैर्यैर्विविधार्तिदानतोऽनिशं निहन्येत समाधिरात्मनः ॥ ३९ ॥

कुक्षौ युवत्याः कृमयो विचित्रा अप्यस्रशुक्रप्रभवा भवन्ति ।
न तेषु तस्या न हि तत्पतेश्च रागस्ततोऽयं किमपत्यकेषु ॥ ४० ॥

त्राणाशक्तेरापदि संबन्धानन्त्यतो मिथोऽङ्गवताम् ।
सन्देहाच्चापकृतेर्माऽपत्येषु स्निहो जीव ॥ ४१ ॥

धनममत्वमोचनाधिकारः ।

याः सुखोपकृतिकृत्त्वधिया त्वं मेलयन्नसि रमा ममताभाक् ।
पाप्मनोऽधिकरणत्वत एता हेतवो ददति संसृतिपातम् ॥ ४२ ॥

यानि द्विषामप्युपकारकाणि सर्पोन्दुरादिष्वपि यैर्गतिश्च ।
शक्यां च नापन्मरणामयाद्या हन्तुं धनेष्वेषु क एव मोहः ॥ ४३ ॥

ममत्वमात्रेण मनःप्रसादसुखं धनैरल्पकमल्पकालं ।
आरम्भपापैः सुचिरं तु दुःखं स्याद्दुर्गतौ दारुणमित्यवेहि ॥ ४४ ॥

---

१ अनादिभवानुभूतविषयादिस्मृतिः संस्कारः । २ विषवल्लरी । ३ विद्युत् । "वज्राशनिं विदुर्वज्रम्" इति त्रिकाण्डशेषः । ४ निजगुणतः प्राप्तनानाभिधानैः । ५ स्निन् इति पाठान्तरम् । ६ चपलैः । ७ चित्तस्वास्थ्यम् । ८ सञ्चयीकुर्वन् । ९ अत्र किंशब्दः कुत्सावाची । १० चित्तप्रसन्नतालक्षणं सौख्यम् । ११ द्रव्यार्जनार्थं षट्कायाद्युपमर्दजनितदुष्कृतैः । १२ नरकादिगतौ ।

द्रव्यस्तवात्मा[1] धनसाधनो न धर्मोऽपि सारम्भतया[2]तिशुद्धः ।
निःसंगतात्मा[3] त्वतिशुद्धयोगान्मुक्तिश्रियं यच्छति तद्भवेऽपि ॥ ४५ ॥

क्षेत्रवस्तु[4]धनधान्यगवाश्वैर्मिलितैः[5] सनिधिभि[6]स्तनुभाजाम् ।
क्लेशपापनरकाभ्यधिकैः[7] स्यात् को गुणो[8] यदि[9] न धर्मनियोगः ॥ ४६ ॥

आरम्भै[10]र्भरितो निमज्जति यतः प्राणी भवाम्भोनिधा-
वीहन्ते कुनृपादयश्च[11] पुरुषं[12] येन[13] च्छलाद्बाधितुम् ।
चिन्ता[14]व्याकुलता[15]कृतेश्च हरते यो धर्मकर्मस्मृतिं
विज्ञा भूरिपरिग्रहं त्यजत तं भोग्यं परैः प्रायशः ॥ ४७ ॥

क्षेत्रेषु[16] नो वपसि यत्सदपि स्वमेत-
द्यातासि तत् परभवे किमिदं गृहीत्वा ।
तस्यार्जनादि[17]जनिताघचयार्जितात्ते
भावी कथं नरकदुःखभराच्च मोक्षः ॥ ४८ ॥

## देहममत्वमोचनाधिकारः ।

पुष्णासि यं देहमघान्यचिन्तयंस्तवोपकारं कमयं विधास्यति ।
कर्माणि कुर्वन्निति चिन्तयायतिं जगन्त्ययं वञ्चयते हि धूर्तराट् ॥ ४९ ॥

---

१ द्रव्यस्तवः पूजाप्रासादप्रतिमाप्रतिष्ठादिको भावकारणं द्रव्यमिति वचनात् स एव आत्मा स्वरूपं यस्य सः । २ सह आरम्भेण षट्कायाद्युपमर्देन वर्तते यः स तस्य भावस्तत्ता तया । एतावता धनप्रभवः पूजादिधर्मोऽपि किञ्चिदारम्भकलकितत्वान्निष्कलंको न भवति । ३ निर्गतः संगो धनधान्यादिर्नवविधः परिग्रहो यस्मात् स तस्य भावस्तत्ता सैवात्मा स्वरूप यस्य सः । अत्र अपिशब्दो वैलक्षण्यद्योतको वैलक्षण्यञ्चेदम्—द्रव्यस्तवात्मा धनसाधनो धर्मो भवान्तरे मुक्तिप्रापको भवति । निःसंगतात्मा तु धर्मस्तपःसंयमरूपो भवान्तरे तद्भवे वा मुक्तिप्रापको भवति । ४ गृहहट्टप्रभृतीनि । ५ सञ्चितैः । ६ निधानसहितैः । ७ अतिरिक्तः । ८ विशेषलाभः । ९ न यदि इति वा पाठः । १० षट्कायाद्युपमर्दैर्व्याप्तः । ११ आदिशब्दात् चौरनटविटादयः । १२ परिग्रहवन्तं पुरुषं । पुरुषा इति वा पाठः । १३ येन परिग्रहेण । १४ चिन्ता परिग्रहस्याप्राप्तस्यार्जनोपायपरिचिन्तनं प्राप्तस्य परिरक्षणोपायचिन्तनञ्च तेन व्याकुलता अस्वास्थ्यम् तस्याः कृतेः करणात् । १५ व्याकुलिता इति पाठान्तरम् । १६ जिनभवनबिम्बपुस्तकसाधुसाध्वी श्रावकश्राविकारूपेषु सप्तसु प्रतिष्ठातीर्थयात्रासहितेषु नवसु वा । १७ आदिपदात् क्रयाणकक्रयविक्रयादयः ।

कारागृहाद्बहुविधाशुचितादिदुःखा-
न्निर्गन्तुमिच्छति जडोऽपि हि तद्विभिद्य ।
क्षिप्तस्ततोऽधिकतरे वपुषि स्वकर्म-
व्रातेन तद्दृढयितुं यतसे किमात्मन् ॥ ५० ॥

चेद्वाञ्छसीदमवितुं परलोकदुःख-
भीत्या ततो न कुरुषे किमु पुण्यमेव ।
शक्यं न रक्षितुमिदं हि न दुःखभीतिः
पुण्यं विना क्षयमुपैति च वज्रिणोऽपि ॥ ५१ ॥

देहे विमुह्य कुरुषे किमघं न वेत्सि
देहस्थ एव भजसे भवदुःखजालम् ।
लोहाश्रितो हि सहते घनघातमग्नि-
र्बाधा न तेऽस्य च नभोवदनाश्रयत्वे ॥ ५२ ॥

दुष्टः कर्मविपाकभूपतिवशः कायाह्वयः कर्मकृत्
बध्वा कर्मगुणैर्हृषीकचषकैः पीतप्रमादासवम् ।
कृत्वा नारकचारकापदुचितं त्वां प्राप्य चाशु च्छलं
गन्तेति स्वहिताय संयमभरं तं वाहयाल्पं ददत् ॥ ५३ ॥

यतः शुचीन्यप्यशुचीभवन्ति कृम्याकुलात् काकशुनादिभक्ष्यात् ।
द्राग्भाविनो भस्मतया ततोऽगात् मांसादिपिण्डात् स्वहितं गृहाण॥५४
परोपकारोऽस्ति तपो जपो वा विनश्वरायस्य फलं न देहात् ।
सभाटकादल्पदिनाप्तगेहमृत्पिण्डमूढः फलमश्नुते किम् ॥ ५५ ॥

---

१ प्राप्नोषि । २ आहाराद्यर्थं हिंसाकारित्वादिदोषदूषितः । अपावित्र्यादिदोषदूषितो वा । ३ दासः । कर्मकरः । ४ चारकः कारागृहं । चारको भोजके बन्धे इति त्रिकाण्डशेषे । ५ आयुःपूर्तिलक्षणं मिषं । ६ सप्तदशसंयमलक्षणं भरं । "पचासवाविरमणं पंचिंदियनिग्गहो कसायजओ । दंडत्तयस्स विरई सत्तरसहा संयमो होई ॥" इति प्रवचनसारोद्धारे । प्रकरणरत्नाकर, भाग ३ पृ० १६२ । ७ लघुकायभाटकप्रायमाहारादि ददत् । ८ "कुक्कुरस्तु शुनिः श्वानः कपिलो मण्डलः शुनः" इति वाचस्पतिः । ९ यथा कश्चिदल्पदिनमर्यादया भाटकेन गृहीते गृहे ममेदं गृहं मा विनश्यत्विति बुद्धया मूढमतिस्तद्गृहं न व्यापारयति स सम्पूर्णावधौ च परकीये गृहे जाते सति तस्य गृहस्य प्राप्तिफलरहितो

मृत्पिण्डरूपेण विनश्वरेण जुगुप्सनीयेन गदालयेन ।
देहेन चेदात्महितं सुसाधं धर्मान्न किं तद्यतसेऽत्र मूढ ॥ ५६ ॥

## विषयप्रमादत्यागाधिकारः ।

अत्यल्पकल्पितसुखाय किमिन्द्रियार्थै-
स्त्वं मुह्यसि प्रतिपदं प्रचुरप्रमादः ।
एते क्षिपन्ति गहने भवभीमकक्षे
जन्तून्न यत्र सुलभा शिवमार्गदृष्टिः ॥ ५७ ॥

आपातरम्ये परिणामदुःखे सुखे कथं वैषयिके रतोऽसि ।
जडोऽपि कार्यं रचयन् हितार्थी करोति विद्वन् यदुदर्कतर्कम् ॥ ५८ ॥
यदिन्द्रियार्थैरिह शर्म विन्दवद्यदर्णवत् स्वःशिवगं परत्र च ।
तयोर्मिथोऽस्ति प्रतिपक्षता कृतिन् विशेषदृष्ट्यान्यतरद्गृहाण तत् ॥५९॥
भुंक्ते कथं नारकतिर्यगादिदुःखानि देहीत्यवधेहि शास्त्रैः ।
निवर्तते ते विषयेषु तृष्णा बिभेषि पापप्रचयाच्च येन ॥ ६० ॥
गर्भवासनरकादिवेदनाः पश्यतोऽनवरतं श्रुतेक्षणैः ।
नो कषायविषयेषु मानसं श्लिष्यते बुध विचिन्तयेति ताः ॥ ६१ ॥
वध्यस्य चोरस्य यथा पशोर्वा संप्राप्यमाणस्य पदं वधस्य ।
शनैः शनैरेति मृतिः समीपं तथाखिलस्येति कथं प्रमादः ॥ ६२ ॥
बिभेषि जन्तो यदि दुःखराशेस्तदिन्द्रियार्थेषु रतिं कृथा मा ।
तदुद्भवं नश्यति शर्म यद्राक् नाशे च तस्य ध्रुवमेव दुःखम् ॥ ६३ ॥
मृतः किमु प्रेतपतिर्दुरामया गताः क्षयं किं नरकाश्च मुद्रिताः ।
ध्रुवाः किमायुर्धनदेहबन्धवः सकौतुको यद्विषयैर्विमुह्यसि ॥ ६४ ॥
विमोह्यसे किं विषयप्रमादैर्भ्रमात् सुखस्यायतिदुःखराशेः ।
तद्गर्धमुक्तस्य हि यत् सुखं ते गतोपमं चायतिमुक्तिदं तत् ॥ ६५ ॥

---

भवति तथा यः परिमितायुषि शरीरे प्राप्ते ममेदं शरीरं परोपकारतपःकरणादिना दुर्बलं मास्त्विति बुद्ध्या मूढमतिस्तच्छरीरं न व्यापारयति सोऽप्यायुःपूर्तौ शरीरनाशे मानुष्यशरीरप्राप्तिफलरहितो भवति ।

१ एकस्य सत्त्वे अपरस्यासत्त्वमितिरूपा वैरिता । २ तद्गार्ध्यमुक्तस्येति वा पाठः ।

## कपायत्यागाधिकारः ।

रे जीव सेहिथ सहिष्यसि च व्यथास्ता-
स्त्वं नारकादिषु पराभवभूः कपायैः ।
मुग्धोदितैः कुवचनादिभिरप्यतः किं
क्रोधान्निहंसि निजपुण्यधनं दुरापम् ॥ ६६ ॥

परा[1]भिभूतौ यदि मान[2]मुक्तिस्तत[3]स्तपोऽखण्डमतः शिवं च ।
[4]मानादृतिर्दुर्वचनादिभिश्च तपःक्षयस्तन्नरकादिदुःखम् ॥ ६७ ॥
वैरादि चात्रेति विचार्य लाभालाभौ कृतिन्ना[5]भवसंभविन्यां ।
तपोऽथवा मान[6]मवाभिभूताविहास्ति नूनं हि गति[7]र्द्वयैव ॥ ६८ ॥
(युग्मम्)

श्रुत्वाक्रोशान् यो मुदा पूरितः स्यात् लोष्ट्याद्यैर्यश्चाहतो लोमहर्षी ।
यः प्राणान्तेऽप्यन्यदोषं न प[8]श्यत्येष श्रेयो द्राग् लभ[9]तैव[10] योगी ॥६९॥

को गुणस्तव कदा च कपायैर्निर्ममे भजसि नित्यमिमान् यत् ।
किं न पश्यसि च दोपममीषां तापमत्र नरकं च परत्र ॥ ७० ॥

यत् कपायजनितं तव सौख्यं यत् कपायपरिहानिभवं च ।
[11]तद्विशेषमथवैतदु[12]दर्कं संविभाव्य भज धीर विशिष्ट[13]म् ॥ ७१ ॥

सुखेन साध्या तपसां प्रवृत्तिर्यथा तथा नैव तु मानमुक्तिः ।
आद्या न [14]दत्तेऽपि शिवं परा तु निदर्शनाद्बाहुबले[15]ः प्रदत्ते ॥ ७२ ॥

सम्यग् विचार्येति विहाय मानं रक्षन् दुरापाणि तपांसि यत्नात् ।
मुदा मनीषी सहतेऽभिभूतीः शूरः क्ष[16]मायामपि नीचजाताः ॥ ७३ ॥

---

१ दुर्वचनादिना पराभवे जायमाने । २ मानत्यागः । ३ तदा । ४ मानादरः । ५ भवं यावत् संभविनी तस्याम् । ६ अव रक्ष । ७ मार्गः । मानत्यागे आभवसंभविवचनमात्रपराभवो भवति । मानादरे च परभवसंभवी नरकादिपराभवो भविष्यति । अतो लाभालाभरूपं मार्गद्वय विचार्य यदिष्टं तद्गृहाण । ८ व्याप्तः । ९ न वक्ति । १० अत्र एवकारोऽत्यन्तायोगं व्यवच्छिनत्ति । ११ तयोः कपायजनितसुखकपायक्षयजनितसुखयोर्विशेषं न्यूनाधिकगुणतालक्षणं । १२ अथवा कपायकरणकपायक्षयकरणयोरुत्तरकालप्रादुर्भूतं कुगतिसुगतिलक्षणं फल साध्यं (सम्यक् पर्यालोच्य) । १३ अनयोर्मध्ये वरिष्ठं । १४ अत्रापिशब्देन तपसा प्रवृत्तिर्मानमुक्तिसहिता शिवं दत्ते मानसहिता च शिवं न दत्ते इति सूच्यते । १५ बाहुबलिकथा परिशिष्टतो ज्ञेया । १६ क्षमायां शूरः । क्षमाशील इत्यर्थः ।

पराभिभूत्यालिपकयापि कुप्यस्यैर्घैरपीमां प्रतिकर्तुमिच्छन् ।
न वेत्सि तिर्यङ्नरकादिकेषु तास्तैरनन्तास्त्वतुला भवित्रीः ॥ ७४ ॥
धत्से कृतिन् यद्यपकारकेषु मानं ततो धेह्यरिषट्क एव ।
अथोपकारिष्वपि तद्भवार्तिकृत्कर्महन्मित्रबहिर्द्विषत्सु ॥ ७५ ॥
अधीत्यनुष्ठानतपःशमाद्यान् धर्मान् विचित्रान् विदधत् समायान् ।
न लप्स्यसे तत्फलमात्मदेहक्लेशाधिकं तांश्च भवान्तरेषु ॥ ७६ ॥
सुखाय धत्से यदि लोभमात्मनो ज्ञानादिरत्नत्रितये विधेहि तत् ।
दुःखाय चेदत्र परत्र चाकृतिन् परिग्रहे तद्बहिरान्तरेऽपि च ॥ ७७ ॥
करोषि यत् प्रेत्यहिताय किञ्चित् कदाचिदल्पं सुकृतं कथंचित् ।
मा जीहरस्तन्मदमत्सराद्यैर्विना च तन्मा नरकातिथिर्भूः ॥ ७८ ॥
पुरापि पापैः पतितोऽसि संसृतौ दधासि रे किं गुणिमत्सरं पुनः ।
न वेत्सि किं घोरजले निपात्यसे नियन्त्र्यसे शृंखलया च सर्वतः ॥७९॥
कष्टेन धर्मो लवशो मिलत्ययं क्षयं कषायैर्युगपत् प्रयाति च ।
अतिप्रयत्नार्जितमर्जुनं ततः किमज्ञ ही हारयसे नभस्वता ॥ ८० ॥

शत्रूभवन्ति सुहृदः, कलुषीभवन्ति
धर्मा, यशांसि निचिताऽयशसीभवन्ति ।

---

१ वधवन्धनादिपापकर्मभिरपि । २ कामक्रोधलोभमानमदहर्षलक्षण । तत्र परपरिगृहीतास्वनूढास्वपि वा स्त्रीषु दुरभिसन्धिः कामः । परस्यात्मनोऽपायमविचार्य कोपकरण क्रोधः । दानार्हेषु स्वधनाप्रदान निष्कारण परधनग्रहण च लोभः । दुरभिनिवेशो मोक्षोद्युक्तोक्ताग्रहणं वा मानः । कुलमदादिभिरहकारकरणं मदः । परदुःखोत्पादनेन स्वस्य द्यूतपापद्ध्र्याद्यनर्थसंश्रयेण वा मन.प्रमोदो हर्षः । ३ तदा । ४ भवार्तिकृन्ति कर्माणि ( ज्ञानावरणीयादीनि ) तानि हरन्तीति हन्ति भवार्तिकृत्कर्महन्ति (परीषहादीनि)। तान्येव च कर्मक्षयलक्षणोपकारकत्वेन मित्राणि भवार्तिकृत्कर्महन्मित्राणि । तान्येव वहिर्द्विषदो वाह्यवैरिणस्तेषु । ५ अध्ययनम् । ६ षडावश्यकादिक्रियाः । ७ मायया सहितान् । ८ अतिरिक्तं । ९ किंतु पुनः । १० ज्ञानदर्शनचारित्ररूपरत्नत्रये । ११ अपण्डित । १२ वाह्यपरिग्रहे धनधान्यादिके नवविधे आन्तरे च परिग्रहे कषायलक्षणे । १३ मा हारय । १४ मदश्च जात्यादिभिरवलिप्तता । मत्सरश्च परसंपदसहनं । १५ सुवर्ण । तपनीयचामीकरचन्द्रभर्मार्जुननिष्ककार्तस्वरकर्बुराणि । १०४४ इति अभिधानचिन्तामणौ हेमचन्द्रः । १६ फूत्कारवातेन । "ध्मातं सुवर्णं फूत्कारेण हारितमसि"त्याभाणकः । १७ अतिशयेन अकीर्तयो भवन्ति ।

स्त्रियन्ति नैव पितरोऽपि न बान्धवाश्च
लोकद्वयेऽपि विपदो भविनां कषायैः ॥ ८१ ॥

रूपलाभकुलविक्रमविद्याश्रीतपोवितरणप्रभुताद्यैः ।
किं मदं वहसि वेत्सि न मूढानन्तशः स्वभृशलाघवदुःखम् ॥ ८२ ॥

विना कषायान्न भवार्तिराशिर्भवेद्भवेदेव च तेषु सत्सु ।
मूलं हि संसारतरोः कषायास्तत्तान् विहायैव सुखी भवात्मन् ॥ ८३ ॥

समीक्ष्य तिर्यङ्नरकादिवेदनाः श्रुतेक्षणैर्धर्मदुरापतां तथा ।
प्रमोदसे यद्विषयैः सकौतुकैस्ततस्तवात्मन् विफलैव चेतना ॥ ८४ ॥

चौरैस्तथा कर्मकरैर्गृहीते दुष्टैः स्वमात्रेऽप्युपतप्यसे त्वम् ।
पुष्टैः प्रमादैस्तनुभिश्च पुण्यधनं न किं वेत्स्यपि लुप्यमानम् ॥ ८५ ॥

मृत्योः कोऽपि न रक्षितो न जगतो दारिद्र्यमुत्रासितं
रोगस्तेननृपादिजा न च भियो निर्नाशिताः षोडश ।
विध्वस्ता नरका न नापि सुखिता धर्मैस्त्रिलोकी सदा
तत् को नाम गुणो मदश्च विभुता का ते स्तुतीच्छा च का ॥८६॥

## शास्त्रगुणाधिकारः ।

शिलातलाभे हृदि ते वहन्ति विशन्ति सिद्धान्तरसा न चान्तः ।
यदत्र नो जीवदयार्द्रतास्ते न भावनाङ्कुरततिश्च लभ्या ॥ ८७ ॥

यस्यागमाम्भोदरसैर्न धौतः प्रमादपंकः स कथं शिवेच्छुः ।
रसायनैर्यस्य गदाः क्षता नो सुदुर्लभं जीवितमस्य नूनम् ॥ ८८ ॥

---

१ दानं । प्रभुता ऐश्वर्यं । आदिपदात् रमणीमन्दिरादिग्रहणम् । २ स्वस्य भृशं अत्यर्थं लाघवदुःखं लघुतादुःखं भावि भूतं वा न वेत्सि । उक्तञ्च—"जातिलाभकुलैश्वर्यबलरूपतपःश्रुतैः । कुर्वन् मदं पुनस्तानि हीनानि लभते जनः ॥" ३ धर्मदुरापतायां दश दृष्टान्ताः परिशिष्टादवगन्तव्याः । ४ ज्ञानं । ५ सुवर्णादिद्रव्यमात्रे । ६ षोडश भियः परिशिष्टे निदर्शिताः सन्ति । ७ सुखं संजातमस्या इति सुखिता । सुखवती कृता । ८ प्रवाहमार्गेणोपरि गच्छन्ति । ९ जिनागमजलानि । १० नं इति वा पाठः । ११ स्यात् प्ररोहोऽङ्कुरोऽङ्कूरो रोहश्च स तु पर्वणः । १११८ इति अभिधानचिन्तामणौ । १२ अज्ञानसंशयविपर्ययरागद्वेषस्मृतिभ्रंशयोगदुःप्रणिधानधर्मानादरभेदादष्टविधः प्रमादः ।

अधीतिनोऽर्चादिकृते जिनागमः प्रमादिनो दुर्गतिपापतेर्मुधा ।
ज्योतिर्विमूढस्य हि दीपपातिनो गुणाय कस्मै शलभस्य चक्षुषी ॥८९॥

मोदन्ते बहुतर्कतर्कणचणाः केचिज्जयाद्वादिनां
काव्यैः केचन कल्पितार्थघटनैस्तुष्टाः कविख्यातितः ।
ज्योतिर्नाटकनीतिलक्षणधनुर्वेदादिशास्त्रैः परे
ब्रूमः प्रेत्यहिते तु कर्मणि जडान् कुक्षिंभरीनेव तान् ॥ ९० ॥

किं मोदसे पण्डितनाममात्रात् शास्त्रेष्वधीती जनरञ्जकेषु ।
तत् किञ्चनाधीष्व कुरुष्व चाशु न ते भवेद्येन भवाब्धिपातः ॥ ९१ ॥

धिगागमैर्माद्यसि रञ्जयन् जनान् नोद्यच्छसि प्रेत्यहिताय संयमे ।
दधासि कुक्षिंभरिमात्रतां मुने क्व ते क्व तत् क्वैष च ते भवान्तरे॥९२॥

धन्याः केऽप्यनधीतिनोऽपि सदनुष्ठानेषु बद्धादरा
दुःसाध्येषु परोपदेशलवतः श्रद्धानशुद्धाशयाः ।
केचित्त्वागमपाठिनोऽपि दधतस्तत्पुस्तकान् येऽलसाः
अत्रामुत्रहितेषु कर्मसु कथं ते भाविनः प्रेत्यहाः ॥ ९३ ॥

धन्यः स मुग्धमतिरप्युदितार्हदाज्ञा-
रागेण यः सृजति पुण्यमदुर्विकल्पः ।
पाठेन किं व्यसनतोऽस्य तु दुर्विकल्पै-
र्यो दुःस्थितोऽत्र सदनुष्ठितिषु प्रमादी ॥ ९४ ॥

अधीतिमात्रेण फलन्ति नागमाः समीहितैर्जीव सुखैर्भवान्तरे ।
स्वनुष्ठितैः किंतु तदीरितैः, खरो न यत् सितायां वहनश्रमात्सुखी ॥९५

---

१ पूजाप्रतिष्ठाद्यर्थं । आदिपदान् वादाद्यर्थं अधीतिनः अभ्ययनशीलस्य । २ दुर्गतिपतनशीलस्य । अत्र पापतेरिति पतधातोः यङि डौ सासहिवावहिचाचलिपापतिरिति सूत्रेण षष्ठ्यां साधुः । ३ दीपदीप्तिमोहितस्य । ४ बहूनां प्रमाणादिपदानां तर्काणां तर्कण विचारणं तेन प्रसिद्धाः । ५ लक्षणानि सामुद्रिकशास्त्राणि । आदिपदात् ब्रह्मयामल रुद्रयामल वास्तुशास्त्र कात्यायनवात्स्यायन शकुनशास्त्रैः ६ ब्रूम इति बहुवचनप्रयोगः समानधर्माणामेकवाक्यतासूचनार्थम् । ७ आगमाः । ८ प्रेत्यहित । ९ संयमः । १० तप.संयमादिक्रियासु । ११ सुगुरूपदेशात् । १२ सम्यक्त्वनिर्मलचित्ताः । १३ परलोकहितहन्तारः । १४ करोति । १५ शंकाकांक्षादिदुष्टविकल्परहितः ।

दुर्गन्धतो यदणुतोऽपि पुरस्य मृत्यु-
रायूंपि सागरमितान्यनुपक्रमाणि ।
स्पर्शः खरः क्रकचतोऽतितमामितश्च
दुःखावनन्तगुणितौ भृशशैत्यतापौ ॥ ९६ ॥

तीव्रा व्यथाः सुरकृता विविधाश्च यत्रा-
क्रन्दारवैः सततमभ्रभृतोऽप्यमुष्मात् ।
किं भाविनो न नरकात् कुमते बिभेषि
यन्मोदसे क्षणसुखैर्विषयैः कषायी ॥ ९७ ॥ युग्मम्

बन्धोऽनिशं वाहनताडनानि क्षुत्तृड्दुरामातपशीतवाताः ।
निजान्यजातीयभयापमृत्यू दुःखानि तिर्यक्ष्विति दुःसहानि ॥ ९८ ॥

सुधान्यदास्याभिभवाभ्यसूया भियोऽन्तगर्भस्थितिदुर्गतीनाम् ।
एवं सुरेष्वप्यसुखानि नित्यं किं तत्सुखैर्वा परिणामदुःखैः ॥ ९९ ॥

संसभीत्यभिभवेष्टविप्लवानिष्टयोगगददुःसुतादिभिः ।
स्याच्चिरं विरसता नृजन्मनः पुण्यतः सरसतां तदानय ॥ १०० ॥

इति चतुर्गतिदुःखततीः कृतिन्नतिभयास्त्वमनन्तमनेहसम् ।
हृदि विभाव्य जिनोक्तकृतान्ततः कुरु तथा न यथास्युरिमास्तव ॥ १०१ ॥

---

१ यस्य नरकस्य परमाणुकणोपमितादपि दुर्गन्धतः । २ सागरोपमकाललक्षणं परिशिष्टे द्रष्टव्यम् । ३ नास्ति उपक्रम आयारम्भो येषु तानि । ४ अतिशयेन । ५ मनुष्यलोकगताच्छैत्यात्तापाद्वा । ६ दुःखोत्पादकौ । ७ अभ्रं नभोमार्गं भरति पूरयति इति तस्मात् । ८ दुष्टरोगाः । मुखपाकपादपाककुष्ठादयः । आम आमय आकल्यमुपतापो गदः समाः । ४६२ इति अभिधानचिन्तामणौ हेमचन्द्रः । अपमृत्युर्गलमोटनगलकर्तनादिना मरणं । अत्र अपमृत्यु० इति वा पाठः । ९ उदरपूरणार्थंरहितमन्येषां दास्य । १० अन्ते देवभवस्थितिपर्यवसाने यद्वा अन्तश्च देवभवायुःपर्यवसानं गर्भस्थितिश्च मनुष्यतिर्यक्स्त्रीणामुदरेषु गर्भत्वेन अवस्थानं दुर्गतयश्च पृथिव्याद्येकेन्द्रियेषु गमनानि तासाम् । ११ इहलोकभयं, परलोकभयं, आदानभयं, अकस्माद्भय, आजीविकाभयं, मरणभय, लोकापवादभयं अथवा अयशोभयं इति सप्त भयस्थानानि । १२ इष्टवियोगः । १३ आदिपदात् कुग्रामकुनृपतिसेवाकुभोजनकुलकलत्रनिर्धनत्वनिःपुत्रत्वकन्याबहुत्वादिग्रहणम् । १४ अनन्त कालं यावदनुभूताः । १५ भगवदुक्तसिद्धान्ततः । राद्धसिद्धकृतेभ्योऽन्त आप्तोक्तिः समयागमौ । २४२ इति अभिधानचिन्तामणौ । १६ इमाश्चतुर्गतिदुःखततयः ।

आत्मन् परस्त्वमसि साहसिकः श्रुताक्षै-
र्यद्भाविनं चिरचतुर्गतिदुःखराशिं ।
पश्यन्नपीह न बिभेषि ततो न तस्य
विच्छित्तये च यतसे विपरीतकारी ॥ १०२ ॥

**चित्तदमनाधिकारः ।**

कुकर्मजालैः कुविकल्पसूत्रैर्निबध्य गाढं नरकाग्निभिश्चिरं ।
विसारवत् पक्ष्यति जीव हे मनःकैवर्तकस्त्वामिति मास्य विश्वसीः १०३

चेतोऽर्थये मयि चिरंत्नसख प्रसीद
किं दुर्विकल्पनिकरे क्षिपसे भवे मां ।
बद्धोऽञ्जलिः कुरु कृपां भज सद्विकल्पान्
मैत्रीं कृतार्थय यतो नरकाद्बिभेमि ॥ १०४ ॥

स्वर्गापवर्गौ नरकं तथान्तर्मुहूर्तमात्रेण वशावशं यत् ।
ददाति जन्तोः सततं, प्रयत्नाद्वशं तदन्तःकरणं कुरुष्व ॥ १०५ ॥

सुखाय दुःखाय च नैव देवा न चापि कालः सुहृदोऽरयो वा ।
भवेत् परं मानसमेव जन्तोः संसारचक्रभ्रमणैकहेतु ॥ १०६ ॥

वशं मनो यस्य समाहितं स्यात् किं तस्य कार्यं नियमैर्यमैश्च ।
हतं मनो यस्य च दुर्विकल्पैः किं तस्य कार्यं नियमैर्यमैश्च ॥ १०७ ॥

---

१ परः साहसिकोऽविमृश्यकारी । २ देवनरतिर्यङ्नरकगतिदुःखसमूहम् । ३ शास्त्रोक्तार्थाद्विपरीतसमाचरणः सन् । ४ ज्ञानावरणीयाद्यष्टविधदुष्टकर्मलक्षणमत्स्यजालैः । ५ कुचिन्तनरूपतन्तुजन्यैः । ६ मत्स्यमिव । ७ अत्रात्मनो मनश्चिरन्तनमित्रता व्यवहारतोऽनेकभवसम्बन्धादेव प्रतीता । ८ धर्मध्यानहेतुकार्यचिन्तनलक्षणान् । ९ अन्तर् मनः । १० केवलम् । ११ अत्र हेतुशब्दो जहल्लिङ्गः । १२ समाधियुक्तं । रागद्वेषरहितमित्यर्थः । १३ शौचादिभिः पञ्चभिः । शौच सन्तोष स्वाध्यायस्तपो देवताप्रणिधानञ्चेति नियमाः । कायमनसोः शुद्धिः शौचम् । संनिहितसाधनादधिकस्यानुपादित्सा सन्तोषः । मोक्षशास्त्रस्याध्ययनं प्रणवजपो वा स्वाध्यायः । तपश्चान्द्रायणादि । देवताया वीतरागस्य प्रणिधानमात्मना सर्वतः संभेदः । १४ अहिंसादिभिः । "अहिंसासूनृतास्तेयब्रह्मचर्यापरिग्रहाः ।" स्तेयमदत्तादानं तदभावोऽस्तेय । अपरिग्रहः परिग्रहत्यागोऽकिञ्चनतेत्यर्थः ।

दानश्रुत[1]ध्यानतपोऽर्चनादि[2] वृथा मनोनिग्रहमन्तरेण ।
कषाय[3]चिन्ताकुलतोज्झितस्य परो[4] हि योगो[5] मनसो वशत्वम् ॥ १०८ ॥

जपो न मुक्त्यै न तपो[6] द्विभेदं न संयमो[7] नापि दमो[8] न मौनम्[9] ।
न साधनाद्यं[10] पवनादि[11]कस्य किं त्वेकमन्तःकरणं सुदान्तम् ॥ १०९ ॥

लब्ध्वापि धर्मं सकलं जिनोदितं सुदुर्लभं पोतनिभं विहाय च ।
मनःपिशाचैर्ग्रहिलीकृतः[12] पतन् भवाम्बुधौ नायतिदृग् जडो जनः ॥ ११० ॥

सुदुर्जयं ही रिपवत्य[13]दो[14] मनो रिपूकरोत्येव च वाक्तनू अपि ।
त्रिभि[15]र्हतस्तद्रिपुभिः करोतु किं पदीभवन्[16] दुर्विपदां पदे पदे ॥ १११ ॥

रे चित्त वैरि तव किं नु[17] मयापराद्धं[18]
यद्दुर्गतौ क्षिपसि मां कुविकल्पजालैः ।
जानासि मामयम[19]पास्य शिवेऽस्ति गन्ता
तत् किं न सन्ति तव वासपदं ह्यसंख्याः ॥ ११२ ॥

पूतिश्रुति[20]श्वेव[21] रतेर्विदूरे कुष्टीव संपत्सुदृशा[22]मनर्हः ।
श्वपाकवत् सद्गतिमन्दिरेषु नार्हेत् प्रवेशं कुमनोहतोऽङ्गी ॥ ११३ ॥

तपोजपाद्याः[23] स्वफलाय[24] धर्मा न दुर्विकल्पैर्हतचेतसः स्युः ।

---

१ दानं पञ्चविध अभयदान, सुपात्रदान, अनुकम्पादानं, उचितदानं, कीर्तिदानञ्चेति । श्रुतं श्रुतज्ञान शास्त्राध्ययन। ध्यान धर्मध्यानं शुक्लध्यानञ्च । तपश्च द्वादशभेदं । अर्चनं अष्टप्रकारादिपूजा । २ आदिपदात् तीर्थयात्राप्रतिष्ठादिधर्मकर्मपरिग्रहः । ३ कषायेभ्यः क्रोधादिभ्यश्चिन्तया आर्तध्यानरौद्रध्यानात्मिकतया आकुलता । ४ प्रकृष्टः । ५ मुक्त्यंगं । ६ बाह्याभ्यन्तरभेदेन द्विप्रकारं तपोऽनशनप्रायश्चित्तादि । ७ पञ्चास्रवविरमणादिः सप्तदशविधः । ८ पञ्चेन्द्रियदमनं । ९ वाक्संयमः । १० आद्यपदेन अवस्थानासनबन्धनादि परिग्रहः । ११ आदिपदेन ध्यानासनादिपरिग्रहः । १२ विकलीकृतः । १३ रिपुवदाचरति स्वयं । १४ "इदमः प्रत्यक्षगते समीपतरवर्तिन्येतदो रूपम्। अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात् ॥" १५ त्रिभिः (रिपुभिः) वाक्कायमनोलक्षणैः । १६ आस्पदीभवन् । १७ वितर्के । १८ अपराधविषयीकृतं विनाशितमित्यर्थः । अत्र वैरिशब्दस्य मनोविशेषणत्वेन नपुंसकलिंगता । १९ सिद्धावस्थायामात्मनोऽमनस्कत्वस्य सिद्धान्ते भणनात् । २० पूतिश्रुतिः इति वा पाठः । २१ पूतिपरिपाकतः कुत्सितगन्धौ श्रुती कर्णौ यस्य सः । २२ सम्पद एव सुदृशस्तासाम् । सम्पत्सु दृशाम् इति वा पदच्छेदः । २३ आद्यपदात् स्वाध्यायप्रमुखा धर्माः । २४ तत्वतो मोक्षफलाय ।

तत्खाद्यपेयैः सुभृतेऽपि गेहे क्षुधातृषाभ्यां म्रियते स्वदोषात् ॥ ११४ ॥
अकृच्छ्रसाध्यं मनसो वशीकृतात् परं च पुण्यं, न तु यस्य तद्वशम् ।
स वञ्चितः पुण्यचयैस्तदुद्भवैः फलैश्च ही ही हतकः करोतु किम् ॥ ११५॥
अकारणं यस्य सुदुर्विकल्पैर्हतं मनः शास्त्रविदोऽपि नित्यम् ।
घोरैरघैर्निश्चितनारकायुर्मृत्यौ प्रयाता नरके स नूनम् ॥ ११६ ॥
योगस्य हेतुर्मनसः समाधिः परं निदानं तपसश्च योगः ।
तपश्च मूलं शिवशर्मवल्ल्या मनःसमाधिं भज तत् कथञ्चित् ॥ ११७॥
स्वाध्याययोगैश्चरणक्रियासु व्यापारणैर्द्वादशभावनाभिः ।
सुधीस्त्रियोगीसदसत्प्रवृत्तिफलोपयोगैश्च मनो निरुन्ध्यात् ॥ ११८ ॥
भावनापरिणामेषु सिंहेष्विव महावने ।
सदा जाग्रत्सु दुर्ध्यानशूकरा न विशन्त्यपि ॥ ११९ ॥

**वैराग्यधर्मोपदेशः ।**

किं जीव माद्यसि हसस्यर्थमीहसेऽर्थान्
कामांश्च खेलसि तथा कुतुकैरशंकः ।

---

१ स्वसमुत्थक्लेशमान्द्यप्रमादलक्षणदोषात् । २ सुखसाध्यम् अशुभविषयान्तरसंचारादिना व्याघाताभावात् । ३ निगृहीतात् शुभयोगव्यापृताद्वा मनसः । ४ प्रकृष्टं । स्वर्गापवर्गादिप्रापणप्रवणपुण्यम् । ५ पुनर् । ६ मनः । यस्य पुंसस्तन्मनो वशं न स इत्युत्तरार्द्धेनान्वयः ७ ज्ञानदर्शनचारित्रात्मकस्याष्टांगस्य वा । ८ एकाग्रता । रागद्वेषराहित्यमित्यर्थः । ९ साधनम् । १० भर इति पाठान्तरम् । भर–धर । ११ स्वाध्यायश्च वाचना पृच्छना परावर्तना अनुप्रेक्षा धर्मकथाभिधः पञ्चविधः । योगाश्च सिद्धान्ताध्ययनायोद्देशसमुद्देशानुज्ञादिकाः पूर्वक्रियाविशेषाः सम्प्रदायगम्याः। यद्वा पञ्चविधानां स्वाध्यायानां योगा व्यापारास्तैः । १२ प्रतिलेखनप्रमार्जनकायोत्सर्गादिषु शुभानुष्ठानेषु व्यापारणै. प्रवर्तनैः । १३ अनित्यता अशरण भव एकत्व अन्यता अशौच आस्रव संवर निर्जरा धर्म लोकबोधिलक्षणास्ताभिः । १४ त्रयाणां मनोवाक्काययोगानां समाहारस्त्रियोगी तस्याः सदसत्प्रवृत्तिफलोपयोगैः सती च असती च सदसती ते च ते प्रवृत्ती च तयोः फल शुभाशुभ कर्म सुखदुःख वा तस्योपयोगाः— सत्प्रवृत्त्या शुभकर्मोपार्जना भवति असत्प्रवृत्त्या चाशुभकर्मोपार्जना भवति इति चिन्तनरूपास्तैः । १५ भावनाध्यवसायेषु । १६ अनुभूयमानेषु । १७ अपिशब्दात् प्रवेशोऽपि न भवति तदा तेषां तत्र स्थितिः कौतस्कुतीत्यर्थद्योतकः । १८ अय मानसप्रत्यक्षसिद्धस्त्वं । १९ रमसे । २० तेन प्रकारेण । २१ कुतूहलजनकैर्द्यूतादिभिः ।

चिक्षिप्सु घोरनरकावटकोटरे त्वा-
मभ्यापतल्लघु विभावय मृत्युरक्षः ॥ १२० ॥

आलम्बनं तव लवादिकुठारघाता-
श्छिन्दन्ति जीविततरुं न हि यावदात्मन् ।
तावद्यतस्व परिणामहिताय तस्मि-
श्छिन्ने हि कः क्व च कथं भविता स्वतन्त्रः ॥ १२१ ॥

त्वमेव मोग्धा मनिता त्वमात्मन्नेष्टाप्यनेष्टा सुखदुःखयोस्त्वम् ।
दाता च भोक्ता च तयोस्त्वमेव तच्चेष्टसे किं न यथाहितासि ॥ १२२ ॥

कस्ते निरञ्जन चिरं जनरञ्जनेन
धीमन् गुणोऽस्ति परमार्थदृशेति पश्य ।
तं रञ्जयाशु चरितैर्विशदैर्भवाब्धौ
यस्त्वां पतन्तमवलं परिपातुमीष्टे ॥ १२३ ॥

विद्वानहं सकललब्धिरहं नृपोऽहं
दाताहमद्भुतगुणोऽहमहं गरीयान् ।

---

१ नरकगतिगतैकदेशशुषिरप्रदेशे । २ अभिमुखमागच्छत् । ३ शीघ्रम् । ४ आधारम् । ५ लवः कालविशेषः स आदौ येषां ते लवादयस्त एव कुठारास्तेषां घाताः प्रहाराः । आदिपदात् प्रहरदिनाहोरात्रादिपरिग्रहः । "अष्टादश निमेषाः स्युः काष्ठा काष्ठाद्वयं लवः ॥" ६ आयतिहितार्थे तपःसंयमादौ । ७ स्वायत्तः । ८ मुह्यतीति मोग्धा अज्ञाता । मन्यते जानातीति मनिता ज्ञाता । ९ सुखस्य वाञ्छाकर्ता । १० द्वेष्टा दुःखस्य । ११ हितासिमनतिक्रम्य । यथासुखम् । सर्वमात्मायत्तं वर्तते न तु दैवायत्तं तथा च किं न यतसे इति भावः । १२ हे निर्लेप । सम्यक्त्ववत्त्वेन विरतिमत्त्वेन च मिथ्यात्वाविरतिरूपाञ्जनरहितत्वादिति संबोधनम् । भाविसिद्धत्वावस्थायां सकलकर्मरूपाञ्जनरहितत्वाद्भाव्यवस्थयेति वा संबोधनम् । १३ आ बाल्यात् आवार्द्धक्यम् । १४ धीर्हिताहितपरिज्ञानं सास्यास्तीति तथेति सम्बोधनम् । अत्र कोमलवचनसंबोधनपदद्वयेनामन्त्रणं धर्मोपदेशश्रवणं प्रति श्रोतुराभिमुख्यापादनार्थम् । कोमलवचनेनामन्त्रितो हि श्रोता प्रसन्नचित्तः सम्यक् श्रोतुं प्रवर्तते । १५ धर्मलक्षणं पदार्थम् । "दुर्गतिप्रपतत्प्राणिधारणाद्धर्म उच्यते" ।

इत्याद्यहंकृतिवशात् परितोषमेषि
नो वेत्सि किं परभवे लघुतां भवित्रीम् ॥ १२४ ॥
वेत्सि स्वरूप[2]फलसाधनबाधनानि
धर्मस्य[3], तं[4] प्रभवसि स्ववशश्च[5] कर्तुम् ।
तस्मिन् यतस्व मतिमन्नधुनेत्यमुत्र
[6]किञ्चित्त्वया[7] हि नहि सेत्स्यति[8] भोत्स्यते[9] वा ॥ १२५ ॥
धर्मस्यावसरोऽस्ति पुद्गलपरावर्तैर[10]नन्तैस्तवा-
यातः संप्रति जीव हे प्रसहतो[11] दुःखान्यनन्तान्ययम्[12] ।
स्वल्पाहः[13] पुनरेष दुर्लभतमश्चास्मिन् यतस्वार्हतो
धर्मं कर्तुमिमं विना हि नहि ते दुःखक्षयः कर्हिचित् ॥१२६॥
गुणस्तुतीर्वाञ्छसि निर्गुणोऽपि सुखप्रतिष्ठादि[14] विनापि पुण्यम् ।
अष्टांगयोगञ्च[15] विनापि सिद्धीर्[16]वातूलता[17] कापि नवा तवात्मन् ॥ १२७ ॥
पदे पदे जीव पराभिभूतीः पश्यन् किमीर्ष्यस्य[18]धमः परेभ्यः ।
अपुण्यमात्मानमवैषि किं न तनोषि किं वा नहि पुण्यमेव ॥ १२८ ॥

---

१ "जातिलाभकुलैश्वर्यबलरूपतपःश्रुतैः । कुर्वन् मदं पुनस्तानि हीनानि लभते जनः॥" इति योगशास्त्रे श्रीहेमचन्द्रसूरिः । २ स्वरूपं क्षान्त्यादिदशप्रकारं फलञ्च स्वर्गापवर्गादि साधनञ्च चत्तारि परमगानि दुल्लहानीह जतुण । माणुसत्त (मानुषत्वं) सुई (श्रुतिः) सद्धा (श्रद्धा) संजमम्मि च वीरियम् (संयमवीर्यम्) इति चतुर्विधम् । बाधनञ्च प्रमादरूप तानि । ३ यतिधर्मस्य श्राद्धधर्मस्य वा । ४ धर्मम् । ५ स्वाधीनः सन् । ६ परलोकसाधनादिकम् । ७ त्वया (करणभूतेन) । ८ सिद्धिं यास्यति । ९ किञ्चिद्धर्मस्य स्वरूपफलादि वस्तु नहि भोत्स्यते ज्ञास्यते त्वया (कर्तृभूतेन) वा अथवा । १० द्रव्यक्षेत्रकालभावभेदैश्चतुर्धा पुद्गलपरावर्तः । औदारिक वैक्रिय तैजस भाषा श्वासोच्छ्वास मनःकार्मणरूपतया सर्वपुद्गलान् परिणमय्य परिणमय्यैको यदा मुचति तदा बादरद्रव्यपुद्गलपरावर्तः । एतेषां सप्तानां मध्यादेकेन केनचिद्रूपेण सर्वान् पुद्गलान् परिणमय्य यदा मुंचति तदा सूक्ष्मद्रव्यपुद्गलपरावर्तः । एव क्रमेण सर्वाण्यपि अनुभागबन्धाध्यवसायस्थानानि यावता मरणेन स्पृष्टानि स्युस्तावान् कालः । ११ प्रकर्षेण सहमानस्य । १२ धर्मस्य अयं प्रत्यक्षोऽनुभूयमानोऽवसरः प्रस्तावः । १३ स्तोकदिन आयातः । १४ श्रेष्ठित्व प्रधानत्वनरनायकत्वादिरूपा । ते आदौ प्रथमं यत्र तत्तथा । आदिपदात् स्वर्गापवर्गादिपरिग्रहः । १५ यमनियमादीनि योगस्याष्टावगानि । १६ लघिमादिसिद्धयश्चाष्टधा । १७ तव वातूलता कापि अवक्तव्या नवा अपूर्वाश्चर्यकारिणी । १८ कुप्यसि ।

किमर्दयन्निर्दयमङ्गिनो लघून् विचेष्टसे कर्मसु ही प्रमादतः ।
यदेकशोऽप्यन्यकृतार्दनः सहत्यनन्तशोऽप्यङ्ग्ययमर्दनं भवे ॥ १२९ ॥

यथा सर्पमुखस्थोऽपि भेको जन्तूनि भक्षयेत् ।
तथा मृत्युमुखस्थोऽपि किमात्मन्नर्दसेऽङ्गिनः ॥ १३० ॥

आत्मानमल्पैरिह वञ्चयित्वा प्रकल्पितैर्वा तनुचित्तसौख्यैः ।
भवाधमे किं जन सागराणि सोढासि ही नारकदुःखराशीन् ॥ १३१ ॥

उरभ्रकाकिण्युदबिन्दुकाम्रवणिक्त्रयीशाकटभिक्षुकाद्यैः ।
निदर्शनैर्हारितमर्त्यजन्मा दुःखी प्रमादैर्बहु शोचितासि ॥ १३२ ॥

पतंगभृंगैणखगाहिमीनद्विपद्विपारिप्रमुखाः प्रमादैः ।
शोच्या यथा स्युर्मृतिबन्धदुःखैश्चिराय भावी त्वमपीति जन्तो ॥ १३३ ॥

पुरापि पापैः पतितोऽसि दुःखराशौ पुनर्मूढ करोषि तानि ।
मज्जन्महापंकिलवारिपूरे शिला निजे मूर्ध्नि गले च धत्से ॥ १३४ ॥

पुनः पुनर्जीव तवोपदिश्यते बिभेपि दुःखात् सुखमीहसे चेत् ।
कुरुष्व तत्किञ्चन येन वाञ्छितं भवेत्तवास्तेऽवसरोऽयमेव यत् ॥ १३५ ॥

धनांगसौख्यस्वजनानसूनपि त्यज त्यजैकं न च धर्ममार्हतम् ।
भवन्ति धर्माद्धि भवे भवेऽर्थितान्यमून्यमीभिः पुनरेष दुर्लभः ॥ १३६ ॥

---

१ प्रवर्तसे । २ यस्मात् एकवारम् । ३ विनिर्मितपरपीडः । कृतमर्दनं येन स कृतार्दनः । अन्यस्य कृतार्दनः अन्यकृतार्दन. । कृतान्यार्दन इत्यर्थे समास इति कथञ्चित् समाधेयं । ४ अयं परपीडाकारी अङ्गी प्राणी । ५ इह भवे । मनुष्यजन्मनि । ६ कायिकमानसिकसुखैः । ७ भवेषु चतुर्गतिलक्षणेषु संसारेषु अधमे नीचे नरकभवे इत्यर्थः । ८ सागरोपमान् कालान् यावत् । सागरोपमकाललक्षणं परिशिष्टे द्रष्टव्यम् । ९ उरभ्रः अजः । काकिणी रूपकाशीतितमो भागः । क्वचित्तु विंशतिवराटकप्रमाणको नाणकविशेषः। उदबिन्दुर्दर्भाग्रवर्ती जलकणः । शाकटः शाकटिकः । आद्यपदेन ये केचन स्वहितकरणसमयेऽसावधानाः पश्चात्पश्चात्तापपराः संग्राह्याः । तेन दरिद्रकुटुंबवणिक्द्वयविद्याधरद्वयदेवदत्तचिन्तामणिदृष्टान्तानां ग्रहणम् । प्रमादपारवश्यात् अकृतसुकृतो मनुष्यभवभ्रष्टो दुर्गतिं गत एतैर्दृष्टान्तैः पश्चात्तापकर्ता भविष्यसि अतः अस्मिन्नेव भवे तथा सुकृतं कुरु यथा अग्रेऽपि सदा आनन्दोदयो भविता। उरभ्रादिकथाः परिशिष्टतो ज्ञेयाः । १० द्विपो गजः । द्विपारिः सिंह । पतंगभृंगादिकथा परिशिष्टे अवलोकनीया ।

दुःखं यथा बहुविधं सहसेऽप्यकामः[1]
कामं[2] तथा सहसि चेत्करुणादिभावैः[3] ।
अल्पीयसापि तव तेन भवान्तरे स्या-
दात्यन्तिकी[4] सकलदुःखनिवृत्तिरेव ॥ १३७ ॥

प्रगल्भसे कर्मसु पापकेष्वरे[5] यदाशया[6] शर्म न तद्विनानितम्[7] ।
विभावयंस्तच्च विनश्वरं द्रुतं बिभेषि किं दुर्गतिदुःखतो नहि ॥ १३८ ॥

कर्माणि रे जीव करोषि तानि यैस्ते भविष्यो विपदो ह्यनन्ताः ।
ताभ्यो भिया तद्दधसेऽधुना[8] किं सम्भाविताभ्योऽपि भृशाकुलत्वम् १३९

ये पालिता[9] वृद्धिमिताः सहैव स्निग्धा भृशस्नेहपदं च ये ते ।
यमेन तानप्यदयं गृहीतान् ज्ञात्वापि किं न त्वरसे हिताय ॥ १४० ॥

यैः क्लिश्यसे त्वं धनबन्धवपत्ययशःप्रभुत्वादिभिराशयैः[10]स्वैः ।
कियानिह प्रेत्य च तैर्गुणस्ते साध्यः किमायुश्च[11] विचारयैवं ॥ १४१ ॥

किमु मुह्यसि गत्वरैः[12] पृथक् कृपणैर्[13]बन्धुवपुःपरिग्रहैः ।
विमृशस्व हितोपयोगिनोऽवसरेऽस्मिन् परलोकपान्थ रे ॥ १४२ ॥

सुखमास्से सुखं शेषे भुंक्षे पिबसि खेलसि ।
न जाने त्वग्रतः पुण्यैर्विना ते किं भविष्यति ॥ १४३ ॥

शीतात्तापान्मक्षिकाकर्तृणादि[14]स्पर्शाद्यु[15]त्थात् कष्टतोऽल्पाद्बिभेषि ।
तांस्तांश्चै[16]भिः कर्मभिः स्वीकरोषि श्वभ्रादीनां वेदना धिग् धियं ते ११४

---

१ निर्जरावाञ्छारहितः । २ निर्जरावाञ्छासहितं यथा स्यात् तथा । ३ मैत्रीप्रमोदकारुण्यमाध्यस्थ्यपरिणामैः । ४ पुनः प्रादुर्भावरहिता तु सोच्छित्तिः । ५ पापजनकेषु । ६ यस्य शर्मणः सुखस्य आशया । ७ अनित जीवितं विना । ८ दध धारणे इत्यस्य दधसे इति प्रयोगः । ९ हितप्रवर्तनाहितनिवर्तनादिना रक्षिताः । १० स्वचित्तकल्पितैः । ११ किं कियन्मात्रम् । १२ भिन्नभिन्नस्थानगमनशीलैः । १३ तुच्छैः । १४ कर्तृणादि इत्यत्र आदिपदात् कर्करादिकर्कशवस्तुपरिग्रहः । १५ स्पर्शादि इत्यत्र आदिपदात् दूरसदुर्गन्धादिपरिग्रहः । १६ प्रत्यक्षतः क्रियमाणैः पापव्यापारैः ।

केचित् कषायैः क्वचन प्रमादैः कदाग्रहैः क्वापि च मत्सराद्यैः ।
आत्मानमात्मन् कलुषीकरोषि बिभेषि धिङ् नो नरकादधर्मा ॥ १४५॥

## धर्मशुद्ध्यधिकारः ।

भवेद्भवापायविनाशनाय तमज्ञ धर्मं कलुषीकरोषि किम् ।
प्रमादमानोपधिमत्सरादिभिर्न मिश्रितं ह्यौपधमामयापहम् ॥ १४६ ॥
शैथिल्यमात्सर्यकदाग्रहक्रुधोऽनुतापदम्भाविधिगौरवाणि च ।
प्रमादमानौ कुगुरुः कुसंगतिः श्लाघार्थिता वा सुकृते मला इमे ॥ १४७॥
यथा तवेष्टा स्वगुणप्रशंसा तथा परेषामिति मत्सरोज्झी ।
तेषामिमां सन्तनु यल्लभेथास्तां नेष्टदानादि विनेष्टलाभः ॥ १४८ ॥
जनेषु गृह्णत्सु गुणान् प्रमोदसे ततो भवित्री गुणरिक्तता तव ।
गृह्णत्सु दोषान् परितप्यसे च रे भवन्तु दोषास्त्वयि सुस्थिरास्ततः॥१४९॥
प्रमोदसे स्वस्य यथान्यनिर्मितैः स्तवैस्तथा चेत् प्रतिपन्थिनामपि ।
विगर्हणैः स्वस्य यथोपतप्यसे तथा रिपूणामपि चेत्ततोऽसि वित् ॥ १५० ॥
स्तवैर्यथा स्वस्य विगर्हणैश्च प्रमोदतापौ भजसे तथा चेत् ।
इमौ परेषामपि तैश्चतुर्ष्वप्युदासतां वासि ततोऽर्थवेदी ॥ १५१ ॥
भवेन्न कोऽपि स्तुतिमात्रतो गुणी ख्यात्या न बह्व्यापि हितं परत्र च ।
तदिच्छुरीर्ष्यादिभिरायतिं ततो मुधाभिमानग्रहिलो निहंसि किम् ॥१५२॥

---

१ परीषहसहनादौ । २ क्रियानुष्ठानादौ । ३ शास्त्रार्थप्ररूपणादौ । ४ समत्सराद्यैः इति वा पाठः । ५ मत्सराद्यैः कदाग्रहैः मिथ्याभिनिवेशाद्यैरसद्ग्रहैः । अत्र आद्यपदेन शास्त्रश्रवणादौ मौल्यादिभिराशातनाकरणेन । ६ धर्मो देशविरतिलक्षणः सर्वविरतिलक्षणः सम्यक्त्वलक्षणो दानादिलक्षणो वा न विद्यते यस्य सः । ७ भवः संसारः तत्संबंधिनो येऽपाया जन्मजरामरणलक्षणा उपद्रवास्तेषां विध्वंसाय । ८ माया । ९ आदिपदात् लोभप्रभृतिभिः । १० रोगोत्पादकद्रव्येण सम्पृक्तं रोगापहारि भेषजं । ११ रोगोच्छेदकं । १२ क्रियाया शिथिलता । १३ शास्त्रोक्तमर्यादया प्रवर्तनं विधिस्तदभावोऽविधिः । १४ मयेदं सुकृतं कृतं ततोऽहं महानिति स्वयं चिन्तनं, लोके महत्त्वप्राप्तये परेषां पुरस्तात् प्रकाशनं वा । १५ सम्यग्ज्ञानदर्शनचारित्ररहितो धर्माचार्यः । १६ परकृतस्वप्रशंसास्पृहालुता । १७ परेषां गुणप्रशंसाम् । १८ सम्यक्प्रकारेण विस्तारय । १९ स्वगुणप्रशंसाम् । २० चेद् इति वा पाठः । २१ स्तव इति वा पाठः । २२ निरर्थकाहंकारग्रस्तः

सृजन्ति के के न[1] बहिर्मुखा[2] जना: प्रमादमात्सर्यकुबोधविप्लुताः[3] ।
दानादिधर्माणि[4] मलीमसान्यमून्युपेक्ष्य शुद्धं सुकृतं चराण्वपि ॥ १५३ ॥

आच्छादितानि सुकृतानि यथा दधन्ते[5]
सौभाग्यमत्र न[6] तथा प्रकटीकृतानि ।
व्रीडानताननसरोजसरोजनेत्रा-
वक्षःस्थलानि कलितानि यथा दुकूलैः ॥ १५४ ॥

स्तुतैः श्रुतैर्वाप्यपरैर्निरीक्षितैर्गुणस्तवात्मन् सुकृतैर्न कश्चन ।
फलन्ति नैव प्रकटीकृतैर्भुवो[7] द्रुमा हि मूलैर्निपतन्त्यपि त्वधः ॥ १५५ ॥

तपःक्रियावश्यक[8]दानपूजनैः शिवं न गन्ता गुणमत्सरी जनः ।
अपथ्यभोजी न निरामयो भवेद्रसायनैरप्यतुलैर्यदातुरः ॥ १५६ ॥

मन्त्रप्रभारत्नरसायनादि[9]निदर्शनादल्पमपीह शुद्धम्[10] ।
दानार्चनावश्यकपोषधादि[11] महा[12]फलं पुण्यमितो ऽन्यथा[13]न्यत् ॥ १५७ ॥

दीपो यथाल्पोऽपि तमांसि हन्ति लवोऽपि रोगान् हरते सुधायाः ।
तृणं दहत्याशु कणोऽपि चाग्नेर्धर्मस्य लेशोऽप्यमलै[14]स्तथांहः ॥ १५८ ॥

भावोपयोग[15]शून्याः कुर्वन्नावश्यकीः[16] क्रियाः सर्वाः ।
देहक्लेशं लभसे फलमाप्स्यसि नैव पुनरासाम् ॥ १५९ ॥

## देवगुरुतत्त्वशुद्ध्यधिकारः ।

तत्त्वेषु[17] सर्वेषु गुरुः प्रधानं हितार्थिधर्मा[18] हि तदुक्तिसाध्याः ।
श्रयंस्तमेवेत्यपरीक्ष्य मूढ धर्मप्रयासान् कुरुषे वृथैव ॥ १६० ॥

---

१ के के न कुर्वन्ति अपि तु प्रायः सर्वेऽपि कुर्वन्तीत्यर्थः । २ बाह्यदृष्टयः प्राकृतजनाः । ३ उपद्रुताः । ४ धर्मशब्दोऽत्र नपुंसकलिंगः । "तानि धर्माणि प्रथमान्यासन्" इतिवत् प्रयोगः । ५ दधि धारणे इत्यस्य प्रथमपुरुषबहुवचनप्रयोगः । ६ "धर्मः क्षरति कीर्तनात्" । ७ पृथिव्याः । ८ सामायिकचतुर्विंशतिस्तवादीनि तैः । ९ आदिपदात् दिव्यास्त्रादिपरिग्रहः । १० मत्सरादिदोषरहित पुण्यम् । ११ पोषधश्चाहारशरीरसंस्काराब्रह्मसावद्यव्यापारनिवृत्तिरूपः । १२ स्वर्गापवर्गादिप्राप्तिलक्षणं । १३ इत उक्तप्रकारात् शुद्धधर्मादन्यथा विपरीत बह्वपि अशुद्ध पुण्य अन्यत् अल्पफलं अफलं वा । १४ मात्सर्यादिदोषरहितः । १५ चित्तोत्साहः । १६ आवश्यिकीः इति वा पाठः । १७ देवगुरुधर्मलक्षणेषु । १८ हितार्थधर्मा इति वा पाठः ।

भवी[1] न धर्मैरविधिप्रयुक्तैर्गामी शिवं येषु गुरुर्न शुद्धः ।
रोगी हि कल्यो[2] न रसायनैस्तैर्येषां प्रयोक्ता भिषगेव मूढः ॥ १६१ ॥

समाश्रितस्तारकबुद्धितो यो यस्यास्त्यहो मज्जयिता स एव ।
ओघं तरीता विषयं कथं स तथैव जन्तुः कुगुरोर्भवाब्धिम् ॥ १६२ ॥

गजाश्वपोतोक्ष[3]रथान् यथेष्टपदाप्तये भद्र निजान् परान् वा ।
भजन्ति विज्ञाः सुगुणान् भजैवं शिवाय शुद्धान् गुरुदेवधर्मान् ॥ १६३ ॥

फला[4]द्वृथाः स्युः कुगुरूपदेशतः कृता हि धर्मार्थमपीह सूद्यमाः ।
त[5]द्दृष्टिरागं परिमुच्य भद्र हे गुरुं विशुद्धं भज चेद्धितार्थ्यसि ॥ १६४ ॥

न्य[6]स्ता मुक्तिपथस्य वा[7]हकतया श्री[8]वीर ये[9] प्राक् त्वया
लुंटा[10]कास्त्वदृतेऽभवन् बहुतरास्त्वच्छासने ते कलौ ।
विभ्राणा यतिनाम तत्तनुधियां मुष्णन्ति पुण्यश्रियः
फूत्कुर्मः किमराजके ह्यपि तला[11]रक्षा न किं दस्यवः ॥ १६५ ॥

माद्यस्यशुद्धैर्गुरुदेवधर्मैर्धिग् दृष्टि[12]रागेण गुणानपेक्षः ।
अमुत्र शोचिष्यसि त[13]त्फले तु कुपथ्यभोजीव महामयार्तः ॥ १६६ ॥

नाम्रं सुसिक्तोऽपि ददाति निम्बकः पुष्टा रसैर्वन्ध्य[14]गवी पयो न च ।
दुःस्थो नृपो नैव सुसेवितः श्रियं ध[15]र्मं शि[16]वं वा कुगुरुर्न सेवितः ॥ १६७ ॥

कुलं न जा[17]तिः पि[18]तरो ग[19]णो वा वि[20]द्या च बन्धुश्च गु[21]रुर्धनं वा ।
हिताय जन्तोर्न परं च किञ्चित् किन्त्वादृताः सद्गुरुदेवधर्माः ॥ १६८ ॥

माता पिता स्वैः[22] सुगुरुश्च त[23]त्त्वात् प्रबोध्य यो योजति शुद्धधर्मे ।

---

१ प्राणी । २ नीरोगः । ३ उक्षाणो बलीवर्दाः । ४ स्वर्गापवर्गादिप्राप्तिफलमाश्रित्य । ५ तस्मात् स्वस्वदर्शनदृष्टिराग । ६ स्थापिताः । ७ प्रवर्तकतया । ८ हे वर्धमानस्वामिन् । ९ सुधर्मादयः । १० मार्गग्राहकतस्कराः । ११ राजनियुक्तनगरोपद्रवनिवारकाः कोट्टपालाः । १२ स्वदर्शनानुरागेण । १३ कुगुर्वादिसेवनजनितमदफले दुर्गतिदुःखानुभवलक्षणे । १४ वन्ध्या गौः वन्ध्यगवी । गोरतद्धितलुकि(?) समासे स्त्रियां ङीप् च । १५ स्वर्गादिप्राप्तिबीजं । १६ अपवर्गम् । १७ मातृवंशः । १८ पितृवंशः । १९ महाजनादिसमूहः । २० तर्कविद्या मन्त्रविद्या वा । २१ कुलगुरुर्विद्यागुरुर्वा । २२ स्वकीयः । २३ परमार्थतः । तत्त्वमार्गोपदेष्टा भवतीति सर्वत्र योज्यम् ।

न तत्समोऽरिः क्षिपते भवाब्धौ यो धर्मविघ्नादि[1]कृतेश्च जीवम्[2] ॥१६९॥

दाक्षिण्यलज्जे गुरुदेवपूजा[3] पित्रादिभक्तिः सुकृताभिलाषः ।
परोपकारव्यवहारशुद्धी नृणामिहामुत्र च सम्पदे स्युः ॥ १७० ॥

जिनेष्वभक्तिर्यमिनामवज्ञा कर्मस्वनौचित्यमधर्मसंगः ।
पित्राद्युपेक्षा परवञ्चनञ्च सृजन्ति पुंसां विपदः समन्तात् ॥ १७१ ॥

भक्त्यैव नार्चसि जिनं सुगुरोश्च धर्मं
नाकर्णयस्यविरतं विरतीर्न[4] धत्से ।
सार्थं[5] निरर्थमपि[6] च प्रचिनोष्यघानि
मूल्येन केन तदमुत्र समीहसे शम्[7] ॥ १७२ ॥

चतुष्पदैः सिंह इव स्वजात्यैर्मिलन्निमांस्तारयतीह कश्चित्[8] ।
सहैव तैर्मज्जति कोऽपि[9] दुर्गे शृगालवच्चेत्यमिलन् वरं सः[10] ॥ १७३ ॥

पूर्णे तटाके तृषितः सदैव भृतेऽपि गेहे क्षुधितः स मूढः ।
कल्पद्रुमे सत्यपि ही दरिद्रो गुर्वादियोगेऽपि हि यः प्रमादी ॥ १७४ ॥

न धर्मचिन्ता गुरुदेवभक्तिर्येषां न वैराग्यलवोऽपि चित्ते ।
तेषां प्रसक्लेशफलः पशूनामिवोद्भवः स्यादुदरम्भरीणाम् ॥ १७५ ॥

न देवकार्ये न च संघकार्ये[11] येषां धनं नश्वरमाशु तेषाम् ।
तदर्जनाद्यैर्वृजिनैर्भवाब्धौ पतिष्यतां किं त्व[12]वलम्बनं स्यात् ॥ १७६ ॥

## यतिशिक्षोपदेशाधिकारः ।

ये तीर्णा भववारिधिं मुनिवरास्तेभ्यो नमस्कुर्महे
येषां नो विषयेषु गृध्यति[13] मनो नो वा कषायैः प्लुतं ।

---

१ सुकृतान्तरायनिष्पादनात् । आदिपदात् उन्मार्गप्रवृत्तिकृतेः । २ यो जीवं प्राणिनम् । ३ अर्चा । सा च द्रव्यभावभेदाभ्यां द्विधा । तत्र द्रव्यपूजा पुष्पाहारादिभिः भावपूजा च स्तुतिस्तोत्रादिभिः । ४ आस्रवादिभ्यो निवृत्तीः । ५ सप्रयोजनं । ६ निष्प्रयोजनं । ७ सुख स्वर्गापवर्गादिज । ८ सुगुरुः । ९ कुगुरुः । १० अमिलन् वरं सः (कुगुरुः) । सिंहशृगालकथा परिशिष्टतोऽवगन्तव्या । ११ साधुसाध्वीश्रावकश्राविकासमुदायः संघः । १२ तु इति वितर्के । १३ आसक्तिं याति ।

रागद्वेषविमुक्[1] प्रशान्तकलुषं साम्यात्तशर्मोद्वयं
नित्यं खेलति चात्मसंयमगुणाक्रीडे[2] भजद्भावनाः ॥ १७७ ॥

स्वाध्यायमाधित्ससि नो प्रमादैः शुद्धा न गुप्तीः[3] समितीश्[4] धत्से ।
तपो द्विधा नार्जसि देहमोहा[5]दल्पेऽपि हेतौ दधसे[6] कषायान् ॥ १७८ ॥

परीषहान्[7] नो सहसे न चोपसर्गान्[8] शीलांगधरोऽ[9]पि चासि ।
तन्मोक्षमाणो[10]ऽपि भवाब्धिपारं मुने कथं यास्यसि वेषमात्रात् ॥ १७९ ॥

युग्मम्

आजीविकार्थमिह यद्यतिवेषमेवं[11]
धत्से चरित्रममलं[12] न तु कष्टभीरुः[13] ।
तद्वेत्सि किं न न बिभेति जगज्जिघृक्षु-*
मृत्युः कुतोऽपि नरकश्च न वेषमात्रात् ॥ १८० ॥

वेषेण माद्यसि यतेश्चरणं विनात्मन्
पूजां च वाञ्छसि जनाद्बहुधोपधिं[14] च ।
मुग्धप्रतारणभवे[15] नरकेऽसि गन्ता
न्यायं बिभर्षि तदजागलकर्तरीयम्[16] ॥ १८१ ॥

जानेऽस्ति संयमतपोभिरमीभि[17]रात्म-
न्नस्य प्रतिग्रहभरस्य[18] न निष्क्रयोऽ[19]पि ।

---

१ प्रकर्षेण शान्त निःसत्ताकीभूतं कलुषं पापकर्म यत्र तत्तथा । २ उद्याने । चात्मसंयमगुणाक्रीडे इति वा पाठः । ३ शुद्धा निरतिचारा गुप्तीः मनोगुप्त्यादिकाः । ४ ईर्यासमित्यादिकाः । ५ ममेदं शरीरं मा दुर्बलं भवतु इति मौढ्यात् । ६ दधि धारणे इत्यस्य मध्यमपुरुषैकवचनस्य रूपम् । ७ परीषहान् क्षुत्तृट्प्रमुखान् । ८ देवमनुष्यतिर्यक्कृतान् परिभवान् । ९ अष्टादशसहस्रशीलांगरथधारकोऽपि । १० मुक्तिं गमिष्यन् । ११ रजोहरणादिलिंगं । १२ निरतिचारं । १३ उपसर्गपरीषहसहनकष्टभीरुः । * जगज्जिघत्सुरिति समीचीनतरः पाठः । १४ वस्त्रपात्रलक्षणं । १५ निर्विवेकलोकवंचनोत्पन्ने नरके दुर्गतिरूपे । १६ अजागलकर्तरीयन्यायः परिशिष्टतो ज्ञेयः । १७ शुद्धिरहितैः सातिचारैः लोकरंजनार्थं क्रियमाणैः संयमतपोभिः । १८ मनोवाञ्छिताशनपानवस्त्रपात्रपीठफलकवसत्यादिग्रहणरूपस्य । १९ निष्क्रयो भाटकमपि नास्ति कुतस्तन्मूल्यस्य संभावनेतिभावः । अत्र तदेति गम्यम् ।

किं दुर्गतौ निपततः शरणं तवास्ते
सौख्यञ्च दास्यति परत्र किमित्यवेहि ॥ १८२ ॥
किं लोकसत्कृतिनमस्करणार्चनाद्यै
रे मुग्ध तुष्यसि विनापि विशुद्धयोगान्[1] ।
कृन्तन् भवान्धुपतने तव यत् प्रमादो
बोधिद्रुमाश्रयमिमानि[2] करोति पर्शून् ॥ १८३ ॥

गुणांस्तवाश्रित्य[3] नमन्त्यमी जना ददत्युपध्यालयभैक्ष्यशिष्यकान् ।
विना गुणान् वेषमृषेर्बिभर्षि चेत् ततष्ठकानां[4] तव भाविनी गतिः ॥ १८४॥

नाजीविकाप्रणयिनीतनयादि[5]चिन्ता
नो राजभीश्च[6] भगवत्समयञ्च[7] वेत्सि ।
शुद्धे तथापि चरणे यतसे न भिक्षो
तत्ते प्रतिग्रहभरो नरकार्थमेव ॥ १८५ ॥

शास्त्रज्ञोऽपि दृढव्रतोपि गृहिणीपुत्रादिबन्धोज्झितोऽ-
प्यंगी यद्यतते प्रमादवशगो न प्रेत्यसौख्यश्रिये[8] ।
तन्मोहद्विषत[9]स्त्रिलोकजयिनः काचित्[10] परा दुष्टता
बद्धायुष्कतया[11] स वा नरपशुर्नूनं गमी दुर्गतौ ॥ १८६ ॥

उच्चारयस्यनुदिनं न करोमि सर्वं
सावद्यमित्यसकृदेतदथो करोषि ।
नित्यं मृषोक्तिजिनवञ्चन[12]भारितात्त-
त्सावद्यतो[13] नरकमेव विभावये ते ॥ १८७ ॥

---

१ सुप्रवृत्तमनोवाक्काययोगान् विना । २ तव बोधिः सम्यक्त्वावाप्तिः स एव द्रुमो वृक्षः स एव आश्रयः पतनसमये अवलम्बन तम् । ३ ज्ञानदर्शनचारित्रादिगुणवंतं त्वां ज्ञात्वा । ४ अत्र ठक इति लोकप्रसिद्धो देशी शब्दः । ५ आजीविका उदरपूरणोपाय. । प्रणयिनी कलत्र । चिन्ता मानसपीडा । अत्र आदिपदात् हट्टगृहादिकरणकुटुम्बभरणपोषणादिपरिग्रहः । ६ नो राजभीर्धरसि वागमपुस्तकानि इति वा पाठः । ७ जैनसिद्धान्तम् । ८ पारभविकसुखसंपदे । ९ मोहवैरिणः । १० अनिर्वाच्या । ११ निकाचितनरकायुष्कतया । १२ भगवन् सर्वं सावद्य यावज्जीव न करोमि इति भणित्वा पुनस्तत्करणेन भगवद्वंचन तेन भारितात् । भारः सञ्जातोऽस्येति भारितः तस्मात् । १३ सावद्यव्यापारात् ।

वेषोपदेशाद्युपधिप्रतारिता ददत्यभीष्टानृजवोऽधुना जनाः ।
भुंक्षे च शेषे च सुखं विचेष्टसे भवान्तरे ज्ञास्यसि तत्फलं पुनः॥१८८॥

आजीविकादिविविधार्तिभृशानिशार्ताः
कृच्छ्रेण केऽपि महतैव सृजन्ति धर्मान् ।
तेभ्योऽपि निर्दय जिघृक्षसि सर्वमिष्टं
नो संयमे च यतसे भविता कथं ही ॥ १८९ ॥

आराधितो वा गुणवान् स्वयं तरन्
भवाब्धिमस्मानपि तारयिष्यति ।
श्रयन्ति ये त्वामिति भूरिभक्तिभिः
फलं तवैषां च किमस्ति निर्गुण ॥ १९० ॥

स्वयं प्रमादैर्निपतन् भवाम्बुधौ कथं स्वभक्तानपि तारयिष्यसि ।
प्रतारयन् स्वार्थमृजून् शिवार्थिनः स्वतोऽन्यतश्चैव विलुप्यसेऽहहा॥१९१॥

गृह्णासि शय्याहृतिपुस्तकोपधीन् सदा परेभ्यस्तपसस्त्वियं स्थितिः ।
तत्ते प्रमादाद्भरितात् प्रतिग्रहैर्ऋणार्णमग्नस्य परत्र का गतिः ॥ १९२ ॥

न कापि सिद्धिर्न च तेऽतिशायि मुने क्रियायोगतपःश्रुतादि ।
तथाप्यहंकारकदर्थितस्त्वं ख्यातीच्छया ताम्यसि धिङ् मुधा किम्॥१९३॥

हीनोऽप्यरे भाग्यगुणैर्मुधात्मन् वाञ्छंस्तवार्चाद्यनवाप्नुवंश्च ।
ईर्ष्यन् परेभ्यो लभसेऽतितापमिहापि याता कुगतिं परत्र ॥ १९४ ॥

---

१ वेषश्च यतिलिंगं उपदेशश्च दानादिषु प्रवृत्त्युत्साहजनकं वचस्तौ आदौ येषां ते तथा [आदिपदात् बाह्यसमितिगुप्तिपालनदर्शनादिपरिग्रहः] ते च ते उपधयश्च दम्भास्तैः प्रतारिताः । २ वर्तमानभवे । ३ सुख यथा स्यात्तथा । ४ जनवंचनजनितसुखानुभवफल नरकादिवेदनालक्षणं । ५ महानुभावाः । ६ कुर्वन्ति । ७ दानादिधर्मान् । ८ सेवन्ते । ९ आयतिहितलक्षण किमस्ति । १० आराध्यस्य तव । ११ आराधकानाम् । १२ आत्मसकाशात् प्रमादाचरणैश्च । १३ पुनरन्यतः परतः शिवार्थिवचनादिना जनितेन । १४ विमोह्यसे । १५ वसतिः । १६ आहारः । १७ ज्ञानोपकरणादि । १८ वस्त्रपात्रादि । १९ तपसस्त्वियं स्थितिः तदकरणलक्षणा व्यवस्था । २० तत्तस्मात् प्रतिग्रहैर्भरितात् निचितात् प्रमादात् विषयकषायादेर्हेतोः । २१ अतिशयेन ऋण तत्र मग्नस्य । चारित्रं गृहीत्वा प्रमादसेवनमेकं ऋणं अपरं च तपः करणमन्तरेण परेभ्यः शय्यादिप्रतिग्रहकरणमिति भावः । २२ अभिमानविडंबितः । २३ आदिपदात् अभ्युत्थानासनदानादिपरिग्रहः ।

गुणैर्विहीनोऽपि जनानतिस्तुतिप्रतिग्रहान् यन्मुदितः प्रतीच्छसि ।
लुलायगोऽश्वोष्ट्रखरादिजन्मभिर्विना ततस्ते भविता न निष्क्रयः ॥१९५॥
गुणेषु नोद्यच्छसि चेन्मुने ततः प्रगीयसे यैरपि वन्द्यसेऽर्च्यसे ।
जुगुप्सितां प्रेत्य गतिं गतोऽपि तैर्हसिष्यसे चाभिभविष्यसेऽपि वा॥१९६॥
दानमाननुतिवन्दनापरैर्मोदसे निकृतिरञ्जितैर्जनैः ।
न त्ववैषि सुकृतस्य चेल्लवः कोऽपि सोऽपि तव लुंठ्यते हि तैः ॥१९७॥
भवेद्गुणी मुग्धकृतैर्नहि स्तवैर्न ख्यातिदानार्चनवन्दनादिभिः ।
विना गुणान्नो भवदुःखसंक्षयस्ततो गुणानर्जय किं स्तवादिभिः॥१९८॥
अध्येषि शास्त्रं सदसद्विचित्रालापादिभिस्ताम्यसि वा समायैः ।
येषां जनानामिह रञ्जनाय भवान्तरे ते क्व मुने क्व च त्वम् ॥ १९९ ॥
परिग्रहं त्वं व्यजहा गृहादेस्तत् किं नु धर्मोपकृतिच्छलात्तम् ।
करोषि शय्योपधिपुस्तकादेर्गरोऽपि नामान्तरतोऽपि हन्ता ॥ २०० ॥
परिग्रहात् स्वीकृतधर्मसाधनाभिधानमात्रात् किमु मूढ तुष्यसि ।
न वेत्सि हेम्नाप्यतिभारिता तरी निमज्जयत्यंगिनमम्बुधौ द्रुतम् ॥ २०१ ॥

---

१ प्रणामः । २ लुलायो महिषः । आदिपदात् भारवाहकगजमनुजादिपरिग्रहः । ३ ज्ञानदर्शनचारित्रलक्षणेषु श्रमणगुणेषु । ४ अत्र अपिशब्द एवकारार्थः । ५ निकृतिर्मलिनवेषवहनादिलक्षणामाया तया रञ्जिताः स्ववशीकृतास्तैः । ६ भद्रकजननिष्पादितैः स्तवैः आरोपितगुणप्रशंसनैः । ७ आदिपदादभ्युत्थानासनदानादिपरिग्रहः । ८ ज्ञानदर्शनचारित्रलक्षणान् । ९ सच्छास्त्रं धर्मशास्त्रं । असच्छास्त्रं कामशास्त्रं ज्योतिःशास्त्रं वा । १० आदिपदात् धर्मलाभाशीर्वाददानादिपरिग्रहः । ११ सकपटैः । येषां जनानां रंजनाय त्वमेतावदिह भवे करोषि ते जनाः स्वकृतकर्मवशगाः परभवे कस्यामपि गतौ गमिष्यन्ति त्वं च कस्यामपि गमिष्यसि इति किं जनरजनेन इति भावः । १२ चेद् इति वा पाठः । १३ अत्याक्षीः । १४ अत्र आदिपदात् द्विपदचतुष्पदादिपरिग्रहः । १५ नु वितर्के । १६ धर्मोपकरणमिषेण वसतिवस्त्रपात्रज्ञानोपकरणादेस्तं परिग्रहं करोषि किम् । १७ यथा मधुरादिनामान्तरेण प्रतिपादितो गरो वत्सनागादिर्हन्ता भवति तथा मूर्च्छया शय्यादिपरिग्रहो धर्मोपकरणमिति नाम्नापि हन्ता भवति । १८ स्वीकृतमंगीकृतं धर्मसाधनमित्यभिधानमात्रं नाममात्रं यस्य स तथा तस्मात् । परिग्रहादित्यस्य विशेषणम् ।

[1]येंऽहः[2]कपायकलिकर्मनिबन्धभाजनं
स्युः पुस्तकादिभिरपीहि[3]तधर्मसाधनैः ।
तेषां रसायनवरैरपि सर्पदामयै-
रार्तात्मनां गदहृ[4]तेः सुखकृत्नु[5] किं भवेत् ॥ २०२ ॥
रक्षार्थं खलु संयमस्य[6] गदिता येऽर्था यतीनां जिनै-
र्वासःपुस्तकपात्रकप्रभृ[7]तयो धर्मोपकृत्यात्मकाः ।
मूर्च्छन्[8]मोहवशात्त एव कुधियां संसारपाताय धिक्
स्वं स्वस्यैव वधाय शस्त्रमधियां यद्दुष्प्रयुक्तं भवेत् ॥ २०३ ॥
संयमोपकरणच्छलात् परान् भारयन्[9] यदसि पुस्तकादिभिः ।
गोखरोष्ट्रमहिषी[10]दिरूपभृत् तच्चिरं त्वमपि भारयिष्यसे ॥ २०४ ॥
वस्त्रपात्रतनुपुस्तकादिनः शोभया न खलु संयमस्य सा[12] ।
आदिमा[13] च द[14]दते भवं परा[15] मुक्तिमाश्रय तदि[16]च्छयैकिकाम् ॥ २०५ ॥
शीतातपाद्यान्न मनागपीह परीषहांश्चेत् क्षमसे विसोढुम् ।
कथं ततो नारकगर्भवासदुःखानि सोढासि भवान्तरे त्वम् ॥ २०६ ॥
मुने न किं नश्वरमस्व[17]देहमृत्पिण्डमेनं सुतपोव्रताद्यैः[18] ।

---

१ यतयः । २ अंहः लिखनारंभादिजन्य पापं। कपायाश्च मूर्च्छोत्पन्नाः क्रोधमानमाया-लोभाः । कलिश्च कपायप्रभवो वाग्वादः । कर्माणि च कलहप्रभवाणि अशुभकर्माणि । तेषां निबन्धो निबन्धनं बीजं मूर्च्छा तस्य भाजन । ३ ईहितो वाञ्छितो धर्मो ज्ञाना-दिस्तस्य साधनैर्हेतुभिर्धर्मोपकरणैः पुस्तकादिभिः । ४ रोगहरणात् । ५ नु वितर्के । ६ चारित्रस्य । ७ अत्र प्रभृतिपदेन स्थपनिकास्थापनाचार्यादिपरिग्रहः । ८ समुच्छ्रायं गच्छन् वृद्धिं गच्छन् । मूर्च्छामोहवशात् इति पाठे तु मूर्च्छा धर्मोपकरणेषु गृद्धिस्तज्जनितो मोहो मौढ्यं तद्वशात् । ९ भारवाहकान् । १० भारवहनविषयीकुर्वन् । ११ आदिपदात् गजतुरगादिपरिग्रहः । १२ शोभा । ; ता तदत्र परिहाय संयमे किं यते न यतसे शिवार्थ्यपि ॥ इति वा उत्तरार्धपाठः । पाठांतरे स्थितस्य तां इत्यस्य वस्त्रादिशोभां इत्यर्थो ज्ञेयः । १३ आदिमा प्रथमा वस्त्रपात्रतनुपुस्तकादिशोभा । १४ अत्र ददि दाने इत्यस्य प्रथमपुरुषैकवचनस्य रूपम् । १५ द्वितीया संयमस्य शोभा । १६ यथेच्छम् । एकिकाम् एका एव एकिका तां वस्त्रादिशोभा संयमशोभां वा आश्रय । १७ अस्वः अनात्मीयः परभवे सहगमनाभावात् । देह एव मृत्पिण्डस्तम् । १८ आद्यपदेन उपसर्गपरीषहादि-सहनपरिग्रहः ।

निपीड्य भीतीर्भवदुःखराशेर्हित्वात्मसाच्छैवसुखं करोषि ॥ २०७ ॥
यदत्र कष्टं चरणस्य पालने परत्र तिर्यङ्नरकेषु यत् पुनः ।
तयोर्मिथः संप्रतिपक्षता स्थिता विशेषदृष्ट्यान्यतरज्जहीहि तत् ॥ २०८ ॥
शमत्र यद्विन्दुरिव प्रमादजं परत्र यच्चाब्धिरिव द्युमुक्तिगम् ।
तयोर्मिथः संप्रतिपक्षता स्थिता विशेषदृष्ट्यान्यतरद्गृहाण ॥ २०९ ॥
सह तपोयमसंयमयन्त्रणां स्ववशतासहने हि गुणो महान् ।
परवशस्त्वतिभूरि सहिष्यसे न च गुणं वहुमाप्स्यसि कञ्चन ॥ २१० ॥
अणीयसा साम्यनियन्त्रणाभुवा मुनेऽत्र कष्टेन चरित्रजेन च ।
यदि क्षयो दुर्गतिगर्भवासगासुखावलेस्तत् किमवापि नार्थितम् ॥ २११ ॥
त्यज स्पृहां स्वःशिवशर्मलाभे स्वीकृत्य तिर्यङ्नरकादि दुःखम् ।
सुखाणुभिश्चेद्विषयादिजातैः सन्तोष्यसे संयमकष्टभीरुः ॥ २१२ ॥
समग्रचिन्तार्तिहृतेरिहापि यस्मिन् सुखं स्यात् परमं रतानाम् ।
परत्र चेन्द्रादिमहोदयश्रीः प्रमाद्यसीहापि कथं चरित्रे ॥ २१३ ॥
महातपोध्यानपरीषहादि न सत्त्वसाध्यं यदि धर्तुमीशः ।
तद्भावनाः किं समितीश्च गुप्तीर्धत्से शिवार्थिन् न मनःप्रसाध्याः ॥ २१४ ॥

---

१ आत्मायत्त किं न करोषि । २ मोक्षसंबंधि सुखं । ३ नियन्त्रणा या चरणेऽत्र तिर्यक्स्त्रीगर्भकुंभीनरकेषु या च । तयोर्मिथः सप्रतिपक्षभावाद्विशेषदृष्ट्यान्यतरां गृहाण ॥ इति पाठान्तरम् । ४ अत्र इहभवे चारित्रस्य । ५ परस्परविरोधिता । ६ विवेकदृष्ट्या गौरवलाघवपर्यालोचनरूपया । पाठांतरे स्थितस्य पदस्य व्याख्या यथा—नियन्त्रणा गाढव्रतबन्धनेनावस्थानरूपा । ७ विषयादिजनित । ८ स्वर्गापवर्गग । ९ यत्र स्वर्गापवर्गग सुख न तत्र प्रमादजं सुखमितिरूपा विरोधिता । १० मोक्षप्राप्तिलक्षणो गुणः । शिवं गुणः इति पाठान्तरम् । ११ तु पुनः । १२ स्वर्गापवर्गसुखप्राप्तौ । १३ आदिपदात् मनुष्यभावगतगर्भवासजरामरणादिपरिग्रहः । १४ हरणात् । अभावादित्यर्थः । "न च राजभयं न च चौरभय । वरकीर्तिकरं नरदेवहित ॥ इहलोकसुख परलोकहितं । श्रमणत्वमिद रमणीयतरम् ॥" १५ महातपोध्यानपरीषहादि चारित्रमित्यर्थः । आदिपदात् उपसर्गपरिग्रहः । १६ सत्वेन मानसशारीरपराक्रमेण साध्यं गम्यम् । १७ कर्तुम् । १८ अनित्यताद्या वोधिपर्यन्ता द्वादश भावनाः । भाव्यते धर्म्यध्यानेन संस्क्रियते आत्मा याभिस्ताः । १९ ईर्याद्याः पञ्च । २० मनोगुप्त्याद्यास्तिस्रः ।

अनित्यताद्या भज भावनाः सदा यतस्व दुःसाध्यगुणेऽपि[1] संयमे ।
जिघत्सया ते त्वरते ह्ययं यमः श्रयन्प्रमादान्न भवाद्बिभेषि किम् ॥ २१५ ॥

हृतं[2] मनस्ते कुविकल्पजालैर्[3] वचोऽप्यवद्यैश्च[4] वपुः प्रमादैः[5] ।
लब्धीश्च सिद्धीश्च तथापि वाञ्छन् मनोरथैरेव हहा हतोऽसि[6] ॥ २१६ ॥

मनोवशस्ते[7] सुखदुःखसंगमो मनो मिलेद्यैस्तु तदात्मकं भवेत् ।
प्रमादचोरैरिति वार्यतां मिलच्छीलांगमित्रैरनुपञ्जया[8]निशम् ॥ २१७ ॥

ध्रुवः प्रमादैर्भववारिधौ मुने तव प्रपातः परमत्सरः पुनः ।
गले निबद्धोरुशिलोपमोऽस्ति चेत् कथं तदोन्मज्जनमप्यवाप्स्यसि ॥ २१८ ॥

महर्षयः[9] केऽपि सहन्त्युदीर्याप्युग्रातपादीन्यदि निर्जरार्थम्[10] ।
कष्टं प्रसंगागतमप्यणीयोऽपीच्छन् शिवं किं सहसे न भिक्षो ॥ २१९ ॥

यो दानमानस्तुतिवन्दनादिभिर्[11] मोदतेऽन्यैर्न[12] तु दुर्मनायते ।
अलाभलाभादिपरीषहान् सहन्[13] यतिः स तत्त्वाद्[14] परो[15] विडम्बकः ॥ २२० ॥

दधद्गृहस्थेषु ममत्वबुद्धिं[16] तदीयतृष्ण्या[17] परितप्यमानः ।
अनिर्वृतान्तःकरणः सदा स्वैस्तेषां च पापैर्भ्रमिता भवेऽसि ॥ २२१ ॥

त्यक्त्वा गृहं स्वं परगेहचिन्तातप्तस्य को नाम गुणस्तवर्षे ।
आजीविकास्ते यतिवेषतो[18]ऽत्र[19] सुदुर्गतिः प्रेत्य तु दुर्निवारा ॥ २२२ ॥

कुर्वे न सावद्यमिति प्रतिज्ञां वदन्नकुर्वन्नपि देहमात्रात् ।
शय्यादिकृत्येषु नुदन् गृहस्थान् हृदा गिरा वासि[20] कथं मुमुक्षुः ॥ २२३ ॥

---

१ अपिशब्दश्चार्थे । २ दग्धं मनो मे इति वा पूर्वार्द्धपाठः । ३ स्त्रीसेवाचिन्तनादिदुर्ध्यानसमूहैः । ४ अलीकभाषणादिभिः पापैः । ५ अष्टविधैः प्रमादैः । ६ विहन्ये इत्युत्तरार्द्धपाठः । ७ चित्ताधीना सुखदुःखप्राप्तिः । मनसः शुभाशुभव्यापारैः शुभाशुभकर्मबन्धस्तेन च सुखदुःखप्राप्तिरिति परंपरया मनोवशः सुखदुःखसंगमः । ८ संयोजय । अनुषंगय इति पाठान्तरम् । ९ अद्भुतचारित्राः । १० कर्मक्षयार्थम् । ११ आदिपदात् पादसंवाहनादिभिः । १२ तत्प्रतिपक्षभूतैरप्राप्तिकर्कराहननगालिप्रदानतिरस्कारादिभिः । १३ जयन् इति वा पाठः । १४ तत्वात् परमार्थतः । १५ तद्विपरीतलक्षणः पुमान् वेषमात्रधरणेन नटः । १६ ममायं भक्त इति मतिम् । १७ गृहस्थसुखदुःखचिन्तया । १८ रजोहरणादियतिलिंगधारणात् । १९ इह भवे । २० वापि इति वा पाठः ।

कथं महत्त्वाय ममत्वतो वा सावद्यमिच्छस्यपि संघलोके ।
न हेममय्यप्युदरे हि शस्त्री शिसा क्षिणोति क्षणतोऽप्यसून् किम् ॥ २२४ ॥

रंकः[1] कोऽपि जनाभिभूतिपदवीं त्यक्त्वा प्रसादाद्गुरो-
वेंषं[2] प्राप्य यतेः कथञ्चन कियच्छास्त्रं पदं[3] कोऽपि च ।
मौखर्यादि[4]वशीकृतर्जुजनतादानार्चनैर्गर्वभा-
गात्मानं गणयन्नरेन्द्रमिव धिग् गन्ता द्रुतं दुर्गतौ ॥ २२५ ॥

प्राप्यापि चारित्रमिदं दुरापं स्वैर्दोषजैर्[5]वृद्धिपयप्रमादैः ।
भवाम्बुधौ धिक् पतितोऽसि भिक्षो हतोऽसि दुःखै[6]स्तदनन्तकालम् ॥ २२६ ॥

कथमपि[7] समवाप्य बोधिरत्नं[8] युगसमिलादिनिदर्शना[9]द्दुरापम् ।
कुरु कुरु रिपुवश्यतामगच्छन् किमपि[10] हितं लभसे यतो[11]ऽर्थितं शम् ॥ २२७ ॥

द्विषस्त्विमे ते विषय[12]प्रमादा असंवृता[13] मानसदेहवाचः ।
असंयमाः[14] सप्तदशापि हास्यादय[15]श्च विभ्यच्चर[16] नित्यमेभ्यः ॥ २२८ ॥

गुरूनवाप्याप्यपहाय गेहम[17]धीत्य शास्त्राण्यपि तत्त्ववाञ्चि[18] ।
निर्वाहचिन्तादि[19]भराद्यभावेऽप्यूषे न किं प्रेत्य हिताय यत्नः ॥ २२९ ॥

विराधितैः संयमसर्वयोगैः[20] पतिष्यतस्ते भवदुःखराशौ ।
शास्त्राणि शिष्योपधिपुस्तकाद्या भक्ताश्च लोकाः शरणाय नालम् ॥ २३० ॥

यस्य क्षणोऽपि सुरधामसुखानि पल्यकोटीर्नृणां द्विनवतीं[21] ह्यधिकां ददाति ।
किं हारयस्यधम संयमजीवितं तत् हा हा प्रमत्त पुनरस्य कुतस्तवाप्तिः ॥ २३१ ॥

---

१ गृहस्थावस्थाया कोऽपि रंकः । २ व्याकरणप्रमाणसिद्धान्तादिग्रन्थानां सूत्रमर्थश्च । ३ पण्डितादिपदवीम् । ४ आदिपदात् सकपटवैराग्यमुद्रादिपरिग्रहः । ५ स्वकीयरागद्वेषलक्षणदोषजन्यैर्विषयप्रमादैः । ६ चातुर्गतिकैः । ७ कथचित् कष्टसहनजनितकामनिर्जरादियोगात् । ८ जिनधर्मप्राप्तिरूपम् । ९ युगसमिलादिनिदर्शनानि परिशिष्टतो ज्ञेयानि । १० सुखसाधनम् । ११ हितसाधनात् । १२ अनुभवप्रत्यक्षा इमे विषयाश्च प्रमादाश्च । १३ संवररहिता मनोवाक्कायाः । १४ पृथिव्याद्यसंयमव्यापाराः । विस्तरस्तु परिशिष्टे द्रष्टव्यः । १५ हास्यरत्यरतिशोकभयजुगुप्सारूपा आभ्यन्तरारयः । १६ चर संयममार्गम् । १७ सकलसंगमूलमपि । १८ तत्वप्रतिपादकानि शास्त्राणि आचारांगादीनि । १९ अत्र आदिशब्दात् गृहव्यापारराज्यव्यापारयानपात्रव्यापारभरादिपरिग्रहः । २० संयमस्य सकलव्यापारैः समितिगुप्तिप्रभृतिभिः खण्डितैः । २१. ९२५९२५९२५८१ वर्षाणि यावत् ।

नाम्नापि यस्येति जनेऽसि पूज्यः शुद्धात्ततो नेष्टसुखानि कानि ।
तत्संयमेऽस्मिन् यतसे मुमुक्षोऽनुभूयमानोरुफलेऽपि किं न ॥ २३२ ॥

## मिथ्यात्वादिनिरोधोपदेशाधिकारः ।

मिथ्यात्वयोगाविरतिप्रमादानात्मन् सदा संवृणु सौख्यमिच्छन् ।
असंवृता यद्भवतापमेते सुसंवृता मुक्तिरमाञ्च दद्युः ॥ २३३ ॥

मनः संवृणु हे विद्वन्नसंवृतमना यतः ।
याति तंदुलमत्स्यो द्राक् सप्तमीं नरकावनीम् ॥ २३४ ॥

प्रसन्नचन्द्रराजर्षेर्मनःप्रसरसंवरौ ।
नरकस्य शिवस्यापि हेतुभूतौ क्षणादपि ॥ २३५ ॥

मनोऽप्रवृत्तिमात्रेण ध्यानं नैकेन्द्रियादिषु ।
धर्म्यशुक्लमनःस्थैर्यभाजस्तु ध्यायिनः स्तुमः ॥ २३६ ॥

सार्थं निरर्थकं वा यन्मनः सद्ध्यानयन्त्रितम् ।
विरतं दुर्विकल्पेभ्यः पारगांस्तान् स्तुवे यतीन् ॥ २३७ ॥

---

१ मिथ्यात्वं—आभिग्राहिकं (पाखंडिनां स्वस्वशास्त्रनियंत्रितविवेकालोकानां परपक्षप्रतिक्षेपदक्षाणाम् ) अनाभिग्राहिकं ( प्राकृतजनानां, सर्वे देवा वन्द्या न निन्द्याः । एवं सर्वे गुरवः सर्वे धर्माश्चाराध्याः ) आभिनिवेशिक ( यथास्थितं वस्तु जानतोऽपि दुरभिनिवेशप्लावितधियः ) सांशयिकं ( देवगुरुधर्मेष्वयमय वेति संशयानस्य ) अनाभोगिकञ्च ( विचारशून्यस्य एकेन्द्रियादेर्विशेषज्ञानविकलस्य ) योगाश्च शुभमनोवाक्कायव्यापाराः । २ दुष्टविषयेभ्यो निवर्तय । ३ महामत्स्यस्य चक्षुःपक्ष्मणि तण्डुलप्रमाणोऽन्तर्मुहूर्तायुरुपजायते। स प्रसुप्तमहामत्स्यस्य विकस्वरवदने जलोर्मिवशात् प्रविशतो निर्यतश्च बहून् मत्स्यान् वीक्ष्य तद्ग्रासाध्यवसायभृद् दुर्ध्यानदारुणपरिणामेन अन्तर्मुहूर्तेन सप्तमं नरकं गच्छति । ४ प्रसन्नचन्द्रराजर्षिकथा परिशिष्टे द्रष्टव्या । ५ चित्तप्रवृत्तिनिवृत्ती । ६ चेतसः प्रवृत्त्यभावमात्रेण संज्ञिपञ्चेन्द्रियातिरिक्तेषु प्राणिषु एकद्वित्रिचतुरिन्द्रियेषु मनोऽप्रवृत्तिरूपं ध्यानं योगांगं न भवति । प्रत्युत पवनसाधने मनोरोधस्य धर्म्यध्यानशुक्लध्यानान्तरायकारित्वादकिञ्चित्करत्वम् । ७ धर्म्यध्यानशुक्लध्यानाभ्यां मनःस्थैर्यं भजन्ति ये तान् । ८ येषां मनः । ९ सुध्यान इति वा पाठः । शुभकार्यकरणमनोरथेन नियंत्रितं । अत्र सार्थकता निरर्थकता च शुभकार्यकरणमनोरथे समुत्पन्ने तत्कार्यसिद्धौ सफलता तत्कार्यासिद्धौ च निष्फलता । उभयत्रापि शुभकार्यानुबन्धिता । "भवन्ति भूरिभिर्भाग्यैर्धर्मकर्ममनोरथाः । फलन्ति यत्पुनस्ते तु तत्सुवर्णस्य सौरभम् ॥" १० अशुभकार्यकरणमनोरथेभ्यो निवृत्तम् । .

वचोऽप्रवृत्तिमात्रेण मौनं के[1]के न बिभ्रते ।
निरव[2]द्यं वचो येषां वचोगु[3]प्तांस्तु तान् स्तुवे ॥ २३८ ॥
निरवद्यं वचो ब्रूहि सावद्यवचनैर्यतः ।
प्रयाता नरकं घोरं वसुरा[4]जादयो द्रुतम् ॥ २३९ ॥
इहामुत्र च वैराय दुर्वाचो नरकाय च ।
अग्निदग्धाः प्ररोहन्ति दुर्वाग्[5]दग्धा पुनर्न हि ॥ २४० ॥
अत एव जिना दीक्षाकाला[6]दाकेवलोद्भवम् ।
अवद्या[7]दिभिया ब्रूयुर्ज्ञान[8]त्रयभृतोऽपि न ॥ २४१ ॥
कृप[9]या संवृ[10]णु स्वां[11]गं कूर्मो ज्ञा[12]तनिदर्शनात् ।
संवृता[13]संवृतांगा यत् सुखदुःखान्यवा[14]पुः ॥ २४२ ॥
कायस्तम्भान्न के के स्युस्तरुस्तम्भादयो य[15]ताः ।
शिवहेतुक्रियो येषां कायस्तांस्तु स्तुवे यतीन् ॥ २४३ ॥
श्रुतिसंयममात्रेण शब्दान् कान् के[16] त्य[17]जन्ति न ।
इष्टानिष्टेषु चैतेषु रा[18]गद्वेषौ त्यजन् मुनिः ॥ २४४ ॥
चक्षुःसंयममात्रात् के रू[19]पालोकांस्त्यजन्ति न ।
इष्टानिष्टेषु चैतेषु रागद्वेषौ त्यजन् मुनिः ॥ २४५ ॥
घ्राणसंयममात्रेण गन्धान् कान् के [20]त्यजन्ति न ।
इष्टानिष्टेषु चैतेषु रागद्वेषौ त्यजन् मुनिः ॥ २४६ ॥
जिह्वासंयममात्रेण रसान् कान् के त्यजन्ति न ।

---

१ एकेन्द्रियादयः । २ निष्पापम् । ३ वाग्गुप्तिधरान् । ४ वसुराजादिकथा परिशिष्टतोऽवगन्तव्या । ५ दुर्वाग्दग्धा जना न प्ररोहन्ति सौमनस्यरूपांकुरवन्तो भवन्ति । ६ दीक्षाकालात् व्रतप्रतिपत्तिसमयादारभ्य आकेवलोद्भवम् केवलज्ञानोत्पत्तिसमयं यावत् । ७ आदिपदात् धर्म्यध्यानविघातभिया । ८ मतिश्रुतावधिज्ञानवन्तोऽपि । ९ जीवदयालक्षणहेतुना । १० निरुन्द्धि । ११ स्वकायं । १२ ज्ञाताधर्मकथांगोक्तदृष्टान्तात् । १३ संलीनासंलीनगात्राः कूर्माः । १४ प्राप्नुवन्ति । १५ संयमिनः । १६ एकेन्द्रियादयश्चतुरिन्द्रियान्ता अनेडमूकबधिरपञ्चेन्द्रियाश्च । १७ परिहरन्ति । १८ प्रीत्यप्रीतिलक्षणौ । १९ त्रीन्द्रियादयश्चक्षुर्दोषदुष्टपञ्चेन्द्रियाश्च । २० एकेन्द्रियद्वीन्द्रियत्रीन्द्रिया दोषग्रस्ताः पञ्चेन्द्रियाश्च ।

मनसा त्यज तानिष्टान् यदीच्छसि तपःफलम् ॥ २४७ ॥
त्वचः संयममात्रेण स्पर्शान् कान् के त्यजन्ति न ।
इष्टानिष्टेषु चैतेषु रागद्वेषौ त्यजन् मुनिः ॥ २४८ ॥
वस्तिसंयममात्रेण ब्रह्म के के न बिभ्रते ।
मनःसंयमतो धेहि धीर चेत्तत्फलार्थ्यसि ॥ २४९ ॥
विषयेन्द्रियसंयोगाभावात् के के न संयताः ।
रागद्वेषमनोयोगाभावाद्ये तु स्तवीमि तान् ॥ २५० ॥
कषायान् संवृणु प्राज्ञ नरकं यदसंवरात् ।
महातपस्विनोऽप्यापुः करटोत्करटादयः ॥ २५१ ॥
यस्यास्ति किञ्चिन्न तपोयमादि ब्रूयात्स यत्तत्तुदतां परान् वा ।
यस्यास्ति कष्टाप्तमिदं तु किं न तद्भ्रंशभीः संवृणुते स योगान् ॥ २५२ ॥
भवेत्समग्रेष्वपि संवरेषु परं निदानं शिवसंपदां यः ।
त्यजन् कषायादिजदुर्विकल्पान् कुर्यान्मनःसंवरमिद्धधीस्तम् ॥ २५३ ॥
तदेवमात्मा कृतसंवरः स्यात् निःसंगताभाक् सततं सुखेन ।
निःसंगभावादथ संवरस्तद्द्वयं शिवार्थी युगपद्भजेत ॥ २५४ ॥

## शुभवृत्तिशिक्षोपदेशाधिकारः ।

आवश्यकेष्वातनु यत्नमाप्तोदितेषु शुद्धेषु तमोपहेषु ।

---

१ समतापरिणामपरिणतचेतसा। २ मोक्षम् । ३ केवलमूत्रागमनिरोधेन । ४ ब्रह्मव्रत । ५ कृत्रिमनपुंसकीकृतनरतुरगबलीवर्दादयो नारकाः संमूर्च्छिमाश्च । ६ अभ्यधेहि । धारयेत्यर्थः । ७ ब्रह्मचर्यफलं मोक्षः तदर्थी । ८ क्षयोपशमेन अनुदयावस्थान् कुरु । ९ करटोत्करटादिकथा परिशिष्टेऽवलोकनीया । १० वदतु । ११ सावद्यं निरर्थकं वा । १२ अशुभमनोवाक्काययोगादिना व्यथां जनयतु । १३ अथवा । १४ बहुप्रयासप्राप्तं तपःसंयमादिसुकृतं । १५ किं न संवृणुते कथं न नियन्त्रयति । १६ समृद्धबुद्धिः पुमान् । तं मनःसंवरम् । १७ निष्पादितसकलकषाययोगनिरोधः । १८ पुत्रकलत्रादिममतारहितवान् । १९ अनायासेन । २० संव्रियन्ते निवार्यन्ते समागच्छन्ति कर्माणि यस्मात् स संवरः । २१ निःसंगतासंवरलक्षणं द्वयम् । २२ प्रतिदिनानुष्ठेयषडावश्यकप्रवृत्तिषु । सामायिकचतुर्विंशतिस्तववंदनकप्रतिक्रमणकायोत्सर्गप्रत्याख्यानाख्येषु नित्यकर्तव्येषु । २३ भगवत्प्रतिपादितेषु । २४ निर्दोषेषु सामायिकादिविषयकदोषरहितेषु । २५ पुराकृतपापहरेषु ।

न हन्त्यमुक्तं न चाप्यशुद्धं[1] वैद्योक्तमप्यौषधमामयापहम् ॥ २५५ ॥
तपांसि तन्याद्विविधानि नित्यं मुखे[2] कटून्यायति[3]सुन्दराणि ।
विघ्नन्ति तान्येव कुकर्मराशिं रसायनानीव दुरामयान् यत् ॥ २५६ ॥
विशुद्ध[4]शीलांगसहस्रधारी भवानिशं[5] निर्मितयोगसिद्धिः ।
सह[6]ोपसर्गां[7]स्तनुनिर्मम[8]ः सन् भजस्व[9] गुप्तीः समितीश्च सम्यक् ॥ २५७ ॥
स्वाध्याययोगेषु[10] दधस्व यत्नं मध्य[11]स्थवृत्त्यानुसरा[12]गमार्थान् ।
अगौ[13]रवो भैक्ष्य[14]मटाविषादी[15] हेतौ[16] विशुद्धे वशितेन्द्रियौघः ॥ २५८ ॥
ददस्व धर्मा[17]र्थितयैव धर्म्यान् सदोपदेशान् स्व[18]परादिसाम्यान् ।
जगद्धितैषी नव[19]भिश्च कल्पैर्ग्रामे[20] कुले वा विहराप्रमत्तः ॥ २५९ ॥
कृताकृतं स्वस्य तपोजपादि शक्तीरशक्तीः सुकृ[21]तेतरे च ।
सदा समीक्षस्व हृदाथ साध्ये यतस्व हेयं त्यज चार्थ[22]यार्थी ॥ २६० ॥

---

१ सदोपम् । २ करणकालस्यादौ कटूनि क्षुत्पिपासादिसहनजनितदुःखोत्पादकत्वेन कटुकरसानि । ३ करणकालादुत्तरकाले । तपोजनितशुभकर्मानुभवकाले । सुंदराणि आनन्ददायकानि । ४ विशुद्ध निरतिचारं शीलमाचारो ब्रह्मचर्यरूपं तस्यांगानि कारणानि तेषां सहस्रं धारयतीति । ५ निर्मिता निष्ठां नीता योगस्य मनोवाक्कायकाम्यस्य ज्ञानदर्शनचारित्रसंनिपातलक्षणस्य वा योगानां वा प्राणायामादीनां सिद्धिर्निष्पत्तिर्येन स तथा । ६ सह क्षमस्व । ७ क्षुत्पिपासादीन् । ८ शरीरममतारहितः । ९ सेवस्व । १० योगाश्चोद्देशसमुद्देशानुज्ञादिरूपानुष्ठानविशेषाः । ११ रागद्वेषराहित्येन । १२ आगमार्थानुसारेण विचर । १३ ऋद्धिगारवरसगारवसातागारवरहितः सन् । "आच्च गौरवे" ८.१.१६३ औतः आत्वं अउश्च भवति--गारवं गउरव इति प्राकृतसिद्धहेमचन्द्रशब्दानुशासने श्रीहेमचन्द्रसूरिः । १४ भिक्षाकर्म कुर्वन् अट भ्रम । १५ श्रमरहितः सन् । १६ निर्दोषे हेतौ मोक्षकारणे ज्ञानदर्शनचारित्रलक्षणे । वशितेन्द्रियौघः जितेन्द्रियवर्गः । १७ धर्मः पुण्य स एवार्थो यस्य स तस्य भावस्तया । अत्र एवकारेण न तु वस्त्राहाराद्यर्थितया इत्यन्ययोगव्यवच्छेदः । १८ स्वश्चात्मा सुहृद्वा अपरश्चात्मव्यतिरिक्तः शत्रुर्वा । स्वपरौ आदौ येषां ते स्वपरादयः तेषां साम्य समभावः प्रतिपाद्यं येषु तान् समतारसप्रतिपादकान् । आदिपदात् अहिहारकुसुमशय्याशिलातलमणिलोष्टतृणवस्त्रैणादिपरिग्रहः । "स्वपरादिसाम्यात्" इति पाठे तु स्वपरप्रमुखश्रोतृषु रागद्वेषराहित्येन समताभावात् । १९ नवभिः कल्पैः साध्वाचारैः । ऋतुबद्धकालेऽष्टौ मासकल्पाः । चतुर्मासककाले एकश्चतुर्मासकल्पः । २० उपलक्षणत्वात् जनपदनगराकरादौ वा शक्त्यभावे कुले उग्रकुलभोगकुलराजन्यकुलक्षत्रियकुललक्षणे भिक्षमाणो विचर । २१ सुकृतं पुण्य इतरत् च पापम् । २२ मोक्षार्थी ।

परस्य पीडापरिवर्जनात्ते त्रिधा त्रियोग्यप्यमला सदास्तु ।
साम्यैकलीनं गतदुर्विकल्पं मनो वचश्चाप्यनघप्रवृत्ति ॥ २६१ ॥
मैत्रीं प्रमोदं करुणां च सम्यक् मध्यस्थतां चानय सात्म्यमात्मन् ।
सद्भावनास्वात्मलयं प्रयत्नात् कृताविरामं रमयस्व चेतः ॥ २६२ ॥
कुर्या न कुत्रापि ममत्वभावं न च प्रभो रत्यरती कषायान् ।
इहापि सौख्यं लभसेऽप्यनीहो ह्यनुत्तरामर्त्यसुखाभमात्मन् ॥ २६३ ॥

इति यतिवरशिक्षां योऽवधार्य व्रतस्थ-
श्चरणकरणयोगानेकचित्तः श्रयेत ।
सपदि भवमहाब्धिं क्लेशराशिं स तीर्त्वा
विलसति शिवसौख्यानन्त्यसायुज्यमाप्य ॥ २६४ ॥

(ग्रन्थोपसंहारः)

## साम्यसर्वस्वाधिकारः ।

एवं सदाभ्यासवशेन सात्म्यं नयस्व साम्यं परमार्थवेदिन् ।
यतः करस्थाः शिवसम्पदस्ते भवन्ति सद्यो भवभीतिभेत्तुः ॥ २६५ ॥

---

१ करणकारणानुमतिलक्षणप्रकारत्रयेण । २ मनोवचःकायलक्षणयोगत्रयी । ३ निरवद्यव्यापारम् । मनोवचःशुद्धेरपेक्षया कायशुद्धिः सुखसाध्या इति हेतोरत्र न कथिता । ४ गुरूक्तयुक्त्या शास्त्रोक्तयुक्त्या वा । ५ आत्मना सह एकीभावम् । आनय प्रापय । ६ संग्रामतन्मयस्वभावं यथा स्यात्तथा । स्वात्मलयं इति वा पाठः । ७ निरन्तरं यथा स्यात्तथा । ८ ना विदध्याः । ९ शय्योपधिपुस्तकादिवस्तुनि मत्वभावं ममेतिबुद्धिलक्षणां ममताम् । १० हे आत्मन् प्रभो । ११ रतिश्च सुन्दरवस्तुष्वासक्तिलक्षणेषु विषयेषु मोहनीयोदयाच्चित्ताभिरतिर्वा । अरतिश्चासुन्दरवस्तुनि प्रद्वेषलक्षणा अनिष्टविषयेषु मोहनीयोदयाच्चित्तोद्वेगो वा । १२ मर्त्यलोके । १३ निःस्पृहः । १४ अनुत्तरविमानवासिसुरानुभवयोग्य सुरसदृशं सौख्यं । ममतादिदोषरहितस्य साधोरिहापि सर्वातिशायि सुखं भवति इति भावः । १५ साधुः । इति अमुना प्रकारेणोक्ताम् । १६ चरणसमितिकरणसमितिलक्षणान् योगान् संयमव्यापारान् । एकचित्तस्तदेकाग्रमनाः । १७ जन्मजरामरणक्षुत्पिपासापरिभवादिलक्षणानां राशिं भवमहाब्धिम् तीर्त्वा निस्तीर्य । १८ शिवसौख्यस्य मोक्षसुखस्य आनन्त्यमविनाशिता तया सह सायुज्यं साहित्यं । सह युग् योगोऽस्येति सयुग् तस्य भावः सायुज्यम् । १९ एवं पञ्चदशद्वारोक्तप्रकारेण । २० पुनः पुनः करणलक्षणाभ्यासायत्ततायोगेन । २१ स्वात्मप्रकृत्या सह एकीभाव नयस्व समताम् । २२ हे तात्त्विकपदार्थज्ञ ।

त्वमेव दुःखं नरकस्त्वमेव त्वमेव शर्मापि शिवं त्वमेव।
त्वमेव कर्माणि मनस्त्वमेव जहीह्यविद्यामवधेहि चात्मन्॥ २६६॥

निःसंगतामेहि सदा तदात्मन्नर्थेष्वशेषेष्वपि साम्यभावात्।
अवेहि विद्वन् ममतैव मूलं शुचां, सुखानां समतैव चेति॥ २६७॥

स्त्रीषु धूलिषु निजे च परे वा संपदि प्रसरदापदि चात्मन्।
तत्त्वमेहि समतां ममतामुग् येन शाश्वतसुखाद्वयमेषि॥ २६८॥

तमेव सेवस्व गुरुं प्रयत्नादधीष्व शास्त्राण्यपि तानि विद्वन्।
तदेव तत्त्वं परिभावयात्मन् येभ्यो भवेत्साम्यसुधोपभोगः॥ २६९॥

समग्रसच्छास्त्रमहार्णवेभ्यः समुद्धृतः साम्यसुधारसोऽयम्।
निपीयतां हे विबुधा लभध्वमिहापि मुक्तेः सुखवर्णिकां यत्॥ २७०॥

शान्तरसभावनात्मा मुनिसुन्दरसूरिभिः कृतो ग्रन्थः।
ब्रह्मस्पृहया ध्येयः स्वपरहितोऽध्यात्मकल्पतरुरेषः॥ २७१॥

इममिति मतिमानधीत्य चित्ते रमयति यो विरमत्ययं भवाद्राक्।
स च नियतमतो रमेत चास्मिन् सह भववैरिजयश्रिया शिवश्रीः॥ २७२॥

इति श्रीशान्तरसभावनात्मस्वरूपोऽध्यात्मकल्पद्रुमो जयश्र्यंकः श्रीमुनिसुन्दरसूरिभि-
विरचितः समाप्तः॥

---

१ दुःख प्रतिकूलवेद्य त्वमेवासि दुःखसाधनोपायप्रेरकत्वात्। २ निरयनाम्नी दुर्गति-स्त्वमेवासि नरकगतिनामकर्मार्जकत्वात्। ३ शर्म सुखमसि सुखसाधनोपायप्रेरकत्वात्। ४ मोक्षोऽसि सकलकर्मराहित्येन जायमानत्वात्। ५ शुभाशुभरूपाणि त्वमेवासि शुभाशुभकर्मार्जकत्वात्। ६ शुभाशुभकर्मबन्धकश्चेतोव्यापारस्त्वमेवासि मनोव्यापारक-त्वात्। ७ अर्थवैपरीत्यलक्षणां। मिथ्याज्ञान ममाय सुखदो ममायं दुःखद इत्यादि-रूपां मिथ्यावासनां वा। ८ यथा सुख भवति दुःखं च न भवति तथा सावधानो भव। ९ नवविधपरिग्रहे ममताराहित्यम्। १० प्राप्नुहि। ११ सुखदुःखजनकेषु पदार्थेषु। १२ स्वजने। १३ परजने वैरिणि वा। १४ राज्यादिसमृद्धौ। १५ आगच्छद्विपत्तौ। १६ इष्टानिष्टवस्तुषु ममत्वत्यजनशीलः। १७ शाश्वतसुखेन मोक्षसुखेन सह अद्वयमैक्यम्। १८ अत्यादरेण श्रूयताम्। १९ मनुष्यभवे स्थिता अपि। २० सौख्यस्य वर्णिकां तत्स्व-रूपसूचकस्तदेकदेशस्ताम्। २१ शान्तरसभावनस्वरूपः। २२ मुक्तिकामनया। २३ पुनः पुनरनुभवति। २४ संसारान्निवर्तते। २५ अतः अस्माद्भवविरमणात्। २६ ग्रन्था-ध्ययनानुभवितरि पुंसि। २७ अत्र जयश्रियेत्यनेन ग्रन्थस्यास्य जयश्र्यंकता दर्शिता।

अध्यात्मकल्पद्रुमाचें

# परिशिष्ट.



( अकारादि अनुक्रमानें )

अजागलकर्तरीय न्यायः—एक खाटिक एका बकरीला वधस्थानीं घेऊन गेला आणि तिच्या मानेवर सुरी ठेवणार तो त्याला अचिंतित घरांत जाण्याचें कारण पडलें. त्यामुळें सुरी तेथेंच टाकून तो घरांत गेला. इकडे बकरीनें ती सुरी लपवून ठेवण्यासाठीं पायांनीं जमीन खणली व त्या खळग्यांत तिनें सुरी ढकलली ती त्यांत उभी पडली. तीवर पायांनीं माती ढकलून बकरी बसावयास गेली तेव्हां तिची मान सुरीचे टोंकावरच पडली आणि ती तत्काल मरण पावली. प्रसंगविशेषीं स्वतःची क्रिया स्वतःलाच घातक होते हें सुचविलें आहे. श्लो. १८१ पहा.

अजीवः—षड्द्रव्य शब्दावरील टीप पहा.

अभिग्रहः—द्रव्य, क्षेत्र, काल व भाव यांच्या योगानें चार प्रकारांचा.

अव्रतें:—जीवहिंसा, मृषावाद, अदत्तादान, मैथुन व परिग्रह हे अव्रताचे प्रकार.

चार गतींचीं निबंधनकर्में ज्याच्या योगानें सर्व बाजूंनीं एकत्र होतात त्यास परिग्रह ही संज्ञा आहे.

अविरतिः—पांच इंद्रियांना स्वस्व विषयांत यथेच्छ प्रवर्तविणें, पापमय वस्तूपासून मनाला न आवरणें, व सहा जीवनिकायांच्या हिंसेंत प्रवृत्त होणें, हे अविरतीचे बारा प्रकार.

अष्टकर्माणि अथवा प्रकृतयः—( १ ) ज्ञानावरणीयकर्म [ श्रुतमतिज्ञानादि पंचविध ज्ञानाचें आवरण करणारें कर्म. ]

( २ ) अंतरायकर्म [ ज्याचे योगानें जीवाला लाभादिकाची प्राप्ति होत नाहीं. ] —त्याचे प्रकारः—दानांतराय, लाभांतराय, भोगांतराय, उपभोगांतराय, व वीर्यांतराय.

( ३ ) दर्शनावरणीयकर्म [ सामान्य अवबोधाला दर्शन ह्मणतात. त्याला

आवृत करणारें कर्म ] त्याचे प्रकार:—चक्षुर्दर्शनावरणीय, अचक्षुर्दर्शनावरणीय (अचक्षु चक्षु शिवाय इतर चार इंद्रियें व मन), अवधिदर्शनावरणीय (रूपिद्रव्याचें मर्यादापूर्वक ज्ञान तें अवधिदर्शन), केवल दर्शनावरणीय व पांच प्रकारांची निद्रा.

(४) मोहनीयकर्म [ तत्वार्थश्रद्धेला विपरीत करणारें कर्म ] त्याचे प्रकार:—मिथ्यात्व, कषाय, नोकषाय ( कषायसाहाय्यकारी हास्यइत्यादि )

(५) नामकर्म [ ज्याचे योगानें शुभाशुभगती आत्म्याला प्राप्त होतात ].

(६) गोत्रकर्म [ ज्यायोगें जीव उंच नीच कुलांत जन्म घेतो ].

(७) आयुःकर्म [ ज्याचा उदय झाला असतां जीव जिवंत राहतो ].

(८) अशाता वेदनीयकर्म [ ज्याचा उदय झाला असतां जीव सुखदुःख भोगतो ].

अष्टादशदोष:—अन्तराया दानलाभवीर्यभोगोपभोगगाः ।
हासो रत्यरती भीतिर्जुगुप्सा शोक एव च ॥
कामो मिथ्यात्वमज्ञानं निद्रा च विरतिस्तथा ।
रागो द्वेषश्च नो दोषास्तेषामष्टादशाप्यमी ॥

अर्थ:—दानान्तराय, लाभान्तराय, वीर्यान्तराय, भोगान्तराय, उपभोगान्तराय, हास्य, रति, अरति, भीति, जुगुप्सा, शोक, काम, मिथ्यात्व, अज्ञान, निद्रा, विरति, राग, व द्वेष हे अठरा दोष जिनांच्या ठायीं असत नाहींत.

आगम:—(१) अंगग्रंथ—आचारांग, सुयगडांग, ठाणांग, समवायांग, भगवती, ज्ञाताधर्मकथा, उपासकदशांग, अंतगडदशांग, अनुत्तरोववाइदशांग, प्रश्नव्याकरण, विपाक. ( बाराव्या दृष्टिवाद अंगाचा विच्छेद झाला आहे. )

(२) उपांगग्रंथ—उव्ववाइ, रायपश्रेणी, जीवाभिगम, पन्नवणा, जंबुद्वीपपन्नति, चंदपन्नति, सुरपन्नति, कप्पीआ, कप्पवडंसिया, पुप्फिआ, पुप्फचुलीआ, वन्हिदिशा.

(३) छेदग्रंथ—व्यवहारसूत्र, बृहत्कल्प, दशाश्रुतस्कंध, निशीथ, महानिशीथ, जितकल्प.

(४) पयन्नाग्रंथ—चौसरण, संथारापयन्नो, तंदुलवेयालीया, चंदाविज्जा, गणिविज्जा, देविंदथुओ, वीरथुओ, गच्छाचार, ज्योतिःकरंड व आउरपच्चक्खाण.

(५) मूलसूत्रग्रंथ—आवश्यक, दशवैकालिक, उत्तराध्ययन, व ओघ-

निर्युक्ति. नंदिसूत्र व अनुयोगद्वारसूत्र. [ काव्यमाला गुच्छक ७ जैनागमस्तव पहा. ]

**आम्रदृष्टान्तः**—एका राजाला आंबा खाण्यामुळें कांहीं भयंकर रोग झाला होता. तेव्हां वैद्यानें त्याला सांगितलें कीं ह्यापुढें आंबा खाऊ नये. एके दिवशीं तो राजा वनविहारार्थ गेला असतां तेथें आम्रवृक्षाच्या छायेखालीं बसला. इतक्यांत वरून पक्क आम्रफळें गळून खालीं पडलीं. तीं राजानें पाहिलीं तेव्हां त्याच्या तोंडाला पाणी सुटलें व जवळची मंडळी निषेध करीत असतांही तीं फळें खाल्लीं आणि कांहीं वेळानें तो राजा मरण पावला. विषयलालसेचा वाईट परिणाम भोगूनही पुनः प्रबल संस्कारवशात् मनुष्य विषयसुखान्ध होऊन मरणदुःखरूप गर्तांत पडतो. श्लो. १३२ पहा.

**आशातनाः**—ज्या क्रियेच्या योगानें धर्माचरणाला बऱ्याच बाजूनीं हानि पोहोंचते [ आ समन्तात् धर्मशातनं यया सा ] अशी क्रिया. धर्माचरणाला ज्यांच्या योगानें बाध येतो त्या खालीं दिल्या आहेतः—तांबूल, पान, भोजन, उपानह, स्त्रीभोग, शयन, निष्ठीवन, मूत्रपुरीषोत्सर्ग, व द्यूत इत्यादि क्रिया जिनमंदिरांत सत्पुरुषानें वर्ज्य कराव्या.

**आस्रवः**—ज्यांच्या योगानें आत्मा कर्मबद्ध होतो ते आस्रव. मिथ्यात्व, अविरति, प्रमाद, कषाय व योग हे मुख्यभेद व उत्तर भेद पांचइंद्रियें, चार कषाय, पांच अव्रतें, पंचवीस क्रिया, व तीन योग हे आहेत.

**आहारादिसंज्ञा**—आहारभयपरिग्गहमेहुणरूवाउ होंति चत्तारि ।
सत्ताणं सण्णाओ आसंसारं समग्गाणं ॥

**अर्थ**—आहार, भय, परिग्रह व मैथुन ह्या प्राण्यांच्या चार संज्ञा आहेत. [ प्रवचनसारोद्धारे. प्र. र. भाग ३ पृ. ३७४. ]

**इंद्रियनिरोधः**—स्पर्शनं रसना घ्राणं चक्षुः श्रोत्रञ्चेति पञ्चेन्द्रियाणि तेषां निरोधः ।

सक्तः शब्दे हरिणः स्पर्शे नागो रसे च वारिचरः ।
कृपणपतंगो रूपे भुजगो गन्धेन च विनष्टः ॥

**उदक बिन्दुदृष्टान्तः**—एका सिद्धानें एका अत्यंत तृषापीडित गृहस्थाला व्याकुल झालेला पाहून त्याला विचारिलें कीं तृषाशमनार्थ मी तुला अमृतजलराशिजवळ घेऊन जातो. इच्छा असल्यास सांग. तेव्हां त्यानें उत्तर दिलें कीं

माझ्या गांवाजवळच्या विहिरीच्या काठीं गवत उगवलें आहे त्याचे अग्रावर जे उदकबिंदु आहेत ते प्राशन करण्याची माझी इच्छा आहे करितां मला तेथें नेऊन पोहोंचवावें. त्याप्रमाणें त्या सिद्धानें त्याला त्या स्थळीं नेऊन ठेवला परंतु ते तृणाग्रलग्न बिंदु तो मूर्ख शिरोमणि तेथें येऊन पोहोंचण्याचे पूर्वींच गळून पडले होते. हातीं आलेलें निधान टाकून देऊन अनिश्चित व अल्पल्प लाभाकडे धांव मारणारा प्राणी मूर्खशिरोमणीशिवाय दुसऱ्या कोणत्या पदवीस पात्र आहे ? श्लो. १३२ पहा.

उपधि—पत्तं पत्ताबंधो पायट्ठवणं च पायकेसरिया ।
पडलाइ रयत्ताणं च गोच्छओ पायनिज्जोगो ॥
तिन्नेव य पच्छागा रयहरणं चेव होइ मुहपत्ती ।
एसो दुवालसविहो उवही, जिनकप्पियाणं तु ॥
एए चेव दुवालस मत्तग अइरेग चोलपट्टो उ ।
एसो चउदसरूवो उवही पुण थेरकप्पस्स ॥

[ प्रवचनसारोद्धारे । प्रकरण रत्नाकर भाग ३ पृ. १३३ ]

अर्थः—पात्र, पात्रबंध, पात्रस्थापनक, पात्रकेसरिका, पटल, रजस्त्राण, गोच्छक, प्रच्छादकत्रय, रजोहरण, व मुखवस्त्रिका हे द्वादश उपधि जिनकल्पी जैनमाधूपाशीं असतात. हे बारा व एक मात्रकापेक्षां किंचित अधिक भिक्षाद्रव्य व चोलपट असे चवदा स्थविरकल्प साधूजवळ असतात.

उरभ्रदृष्टान्त—एका गृहस्थानें एक बोकड पाळला होता. पाहुणचाराचे वेळीं त्याचा उपयोग व्हावा या हेतूनें त्याच्या खाण्यापिण्याची व्यवस्था उत्तम ठेविली होती. आपल्या धन्याचा मनोगत हेतु त्याला न कळल्यामुळें तो बोकड खाण्यापिण्याचे सुखांत मग्न झाला होता. याशिवाय दुसरा कोणताही विचार त्याचे डोक्यांत येत नव्हता. एके दिवशीं त्या गृहस्थाचे घरीं पाहुणा आला. त्याचे उपयोगासाठीं जेव्हां त्या बोकडाचे गळ्यावर सुरी आली तेव्हा तो मोठ्यानें ओरडूं लागला. पण अंतकालीं या ओरडण्याचा काय उपयोग ? यावज्जीव विषयसेवन करून त्याच्या दारुण विपाकाचा प्रसंग आल्यावर रडून उपयोग काय ? श्लो. १३२ पहा.

करटोत्करट कथाः—करट व उत्करट नांवाचे दोन महातपस्वी होते. ते एका नगराच्या कोटासभोंवतीं असलेल्या खंदकांत येऊन राहिले. वर्षाऋतूंत

खंदकांत पाणी भरून त्यांत तपस्वी बुडून किंवा वाहून जाऊन मरूं नयेत ह्मणून देवानें तेथें वृष्टि केली नाहीं, इतर ठिकाणीं वृष्टि झाली. अनावृष्टि होण्याला कारण साधु आहेत हें लोकांस समजल्यावर त्यांनीं साधूंस खरपूस मार देऊन काढून लावलें. तेव्हां तपस्वी ह्मणाले कीं या नगरीवर मुसळधार वृष्टि होवो. तदुक्तीप्रमाणें अतिवृष्टि झाल्यामुळें नगरांतील बरेच लोक मेले. या पापामुळें ते तपस्वी नरकांत पडले. श्लो. २५१ पहा.

**करणसप्तति:**—पिंडविसोही समिई भावण पडिमा य इंद्रियनिरोहो।
पडिलेहण गुत्तीओ अभिग्गह चेव करणं तु ॥

**अर्थ:**—चतुर्विध पिंडविशुद्धि (दोषरहित आहार, उपाश्रय, वस्त्र व पात्र) पांच समिति, द्वादशभावना, द्वादशप्रतिमा, पञ्चविध इंद्रियनिरोध, पंचवीस प्रतिलेखना, गुप्तित्रय, व चतुर्विध अभिग्रह.

**कषाय:**—कोहो माणो माया लोभो चउरो हवंति हु कसाया । इति प्रवचनसारोद्धारे। प्र. र. भाग ३ पृ. १६८.

**अर्थ:**—क्रोध मान माया व लोभ हे चार कपाय।

**काकिणीदृष्टान्त:**—एक गृहस्थ द्रव्यार्जनासाठीं परदेशीं गेला होता. तेथें कांहीं उद्योगधंदा करून त्यानें कांहीं द्रव्य मिळविलें होते तें घेऊन घराकडे परत येतांना वाटेंत खर्च करण्यासाठीं त्यांतील एका रुपयाचे पैसे करून घेतले होते. वाट चालून थकल्यामुळें एके ठिकाणीं विश्रांति घेण्याकरितां तो थांबला. श्रमपरिहार झाल्यावर पुनः वाट चालूं लागला आणि कांहीं वेळानें दुसऱ्या मुक्कामावर येऊन पोहोचला. तेथें त्याला आढळून आलें कीं आपला एक पैसा कमी आहे. तेव्हां द्रव्याची पिशवी तेथें एके ठिकाणीं लपवून ठेवून तो पैशाचा शोध लावण्यासाठीं मागे परतला. पहिल्या मुक्कामीं येऊन पोहोंचल्यावर त्याला तेथें पैसा आढळला नाहीं तेव्हां निराश होऊन मागें परतला आणि पुनः दुसऱ्या मुक्कामीं येऊन पोहोचला. तेथें पिशवीही त्याला मिळाली नाहीं. क्षणिक सुखाच्या मागें लागून सर्वस्वही बुडविलें व तो उभयतोभ्रष्ट या निंद्य संज्ञेस पात्र झाला. श्लो. १३२ पहा.




गतिः—पंच गईओ नारय तिरिय नर सुर सिद्धनामाओ । इति प्रवचन सारोद्धारे । प्र. र. भाग ३ पृ. २९४.

अर्थः—नारक तिर्यक् नर सुर व सिद्ध या पांच गति ।

गारव—गारव हें गौरव शब्दाचें प्राकृत रूप आहे. गारव ह्याचा अर्थ लोलुपता अथवा अभिमान असा होतो. गारवाचे तीन प्रकार आहेत—ऋद्धिगारव, रसगारव, व शाता (सुख) गारव.

गुप्तित्रयं—मनोगुप्ति, वचनगुप्ति व कायगुप्ति.

गुरु— महाव्रतधरा धीरा भैक्ष्यमात्रोपजीविनः ।
सामायिकस्था धर्मोपदेशका गुरवो मताः ॥


जीव
सिद्धरूप
( निरिंद्रिय व शरीररहित )
संसारी
नारक
( पंचेंद्रिययुक्त )
तिर्यक्
मनुष्य
( पंचेंद्रिययुक्त )
देव
( पंचेंद्रिययुक्त )
रत्नप्रभादि सात
नरकांतील जीव
स्थावर
( एकेंद्रिय
स्पर्शेंद्रिययुक्त )
त्रस
भावन
व्यंतर
ज्योतिष्क
वैमानिक
असुरादि
किंनरादि
सूर्यचन्द्रादि
भोगभूमिभव
कर्मभूमिभव
कल्पसंभूत
कल्पातीत
पृथिवीकाय
अप्काय
वनस्पतिकाय
आर्य
म्लेंच्छ
एकेंद्रिय
द्वींद्रिय
त्रींद्रिय
चतुरिंद्रिय
पचेंद्रिय (=जलचर स्थलचर व खचर)
तेजस्काय
वायुकाय
स्पर्श व रसना यांनीं
युक्त कृमि
स्पर्श रसना व घ्राण
यांनी युक्त माकोडा
स्पर्श रसना घ्राण व चक्षु
यांनीं युक्त माशी, डांस
स्पर्श रसना घ्राण चक्षु व कर्ण यांनी
युक्त मत्स्य पशुपक्षी

धर्मरत्नत्रयीः—यथावस्थित वस्तूचा जें यथार्थ बोध करतें तें ज्ञान. ज्ञानावरणीय कर्मांचा क्षय व क्षयोपशम झाल्यामुळें उत्पन्न झालेला बोध त्याला हेतु जे द्वादशांग, द्वादश उपांग व उत्तराध्ययनादि प्रकीर्णक त्या सर्वांना ज्ञान ही संज्ञा आहे.

जीव अजीव पुण्य पाप आस्रव संवर निर्जरा बंध व मोक्ष या नव तत्वांच्या स्वरूपावर श्रद्धा, जसें कीं हीं तत्वें सत्य आहेत, मिथ्या नाहींत, तें दर्शन.

सर्वपापव्यापारापासून ज्ञानश्रद्धानपूर्वक निवृत्त होणें त्यास चारित्र ह्मणतात.

ज्ञानमर्थपरिबोधलक्षणं दर्शनं जिनमताभिरोचनम् ।
पापकार्यविरतिस्वभावकं कीर्तितं चरितमात्मवेदिभिः ॥ ५० ॥
संगतं त्रयमिदं प्रजायते कृत्स्नकर्मविनिवृत्तिकारणम् ।
पङ्गुलोचनविहीनवन्ध्ववेदेककं न पुनरर्थसाधकम् ॥ ५१ ॥

इति चन्द्रप्रभचरितकाव्ये अष्टादशसर्गे

तत्वस्यावगतिर्ज्ञानं श्रद्धानं तस्य दर्शनम् ।
पापारम्भनिवृत्तिस्तु चारित्रं वर्ण्यते जिनैः ॥ १६२ ॥
ज्वालाकलापवद्वह्नेरूर्ध्वमेरण्डबीजवत् ।
ततः स्वभावतो याति जीवः प्रक्षीणबन्धनः ॥ १६३ ॥

इति धर्मशर्माभ्युदयकाव्ये एकविंशे सर्गे




आर्तध्यान—इष्टवस्तूच्या वियोगानें, अनिष्टवस्तूच्या संयोगानें किंवा इतरप्रकारांनीं मनांत उद्भवणारी दुःखचिंता.

रौद्रध्यान—स्वतः जीवहिंसा करून किंवा ती करितांना दुसऱ्यास पाहून, कपटभापणानें दुसऱ्यास फसवून मनांत हर्ष मानणें.

धर्म्यध्यान—शुद्धधर्माचें एकाग्रतेनें चिंतन करणें. याच्या मैत्री, प्रमोद, कारुण्य, व माध्यस्थ्य ह्या चार भावना.

शुक्लध्यान—निर्मल आत्म्याच्या स्वरूपाचें तन्मयत्वें ध्यान करणें.

**नवकल्पः**—हिंवाळ्यांत व उन्हाळ्यांत एका महिन्याहून जास्त दिवस व पावसाळ्यांत चार महिन्यांपेक्षां अधिक दिवस एके ठिकाणीं जैन साधूंना रहातां येत नाहीं, ह्मणून आठ महिन्यांचे आठ कल्प व एक चतुर्मासक कल्प मिळून नव कल्प करून विहार करीत असावें लागतें.

**निर्जराः**—दुर्जरं निर्जरत्यात्मा यया कर्म शुभाशुभम् ।
निर्जरा सा द्विधा ज्ञेया सकामाकामभेदतः ॥ १२२ ॥
सा सकामा स्मृता जैनैर्या व्रतोपक्रमैः कृता ।
अकामा स्वविपाकेन यथा श्वभ्रनिवासिनाम् ॥ १२३ ॥
सागारमनगारं च जैनैरुक्तं व्रतं द्विधा ।
अणुव्रतादिभेदेन, तयोः सागारमुच्यते ॥ १२४ ॥
अणुव्रतानि पञ्च स्युस्त्रिप्रकारं गुणव्रतम् ।
शिक्षाव्रतानि चत्वारि सागाराणां जिनागमे ॥ १२५ ॥
हिंसानृतवचःस्तेयस्त्रीमैथुनपरिग्रहात् ।
देशतो विरतिर्ज्ञेया पञ्चधाणुव्रतस्थितिः ॥ १४२ ॥
दिग्देशानर्थदण्डेभ्यो यत्त्रिधा विनिवर्तनम् ।
पोतायते भवाम्भोधौ त्रिविधं तद्गुणव्रतम् ॥ १४३ ॥
सामायिकमथाद्यं स्याच्छिक्षाव्रतमगारिणाम् ।
आर्तरौद्रे परित्यज्य त्रिकाल जिनवन्दनात् ॥ १४९ ॥
निवृत्तिर्भुक्तभोगानां या स्यात्पर्वचतुष्टये ।
पोषधाख्यं द्वितीयं तच्छिक्षाव्रतमीरितम् ॥ १५० ॥
भोगोपभोगसंख्यान क्रियते यदलोलुपैः ।
तृतीयं तत्तदाख्यं स्याद्दुःखदावानलोदकम् ॥ १५१ ॥
गृहागताय यत्काले शुद्धं दानं यतात्मने ।
अन्ते सल्लेखना वान्यत्तच्चतुर्थं प्रकीर्त्यते ॥ १५२ ॥
व्रतानि द्वादशैतानि सम्यग्दृष्टिर्बिभर्ति यः ।
जानुदघ्नीकृतागाधभवाम्भोधिः स जायते ॥ १५३ ॥
अनगारं व्रतं द्वेधा बाह्याभ्यन्तरभेदतः ।
षोढा बाह्यं जिनैः प्रोक्तं तावत्संख्यानमान्तरम् ॥ १५४ ॥

वृत्तिसंख्यानमौदर्यमुपवासो रसोज्झनम् ।
रहःस्थितितनुक्लेशौ षोढा बाह्यमिति व्रतम् ॥ १५५ ॥
स्वाध्यायो विनयो ध्यानं व्युत्सर्गो व्यावृतिस्तथा ।
प्रायश्चित्तमिति प्रोक्तं तपः षड्विधमान्तरम् ॥ १५६ ॥
यास्तिस्रो गुप्तयः पञ्च ख्याताः समितयोऽपि ताः ।
जननात् पालनात् पोषादष्टौ तन्मातरः स्मृताः ॥ १५७ ॥
[ इति धर्मशर्माभ्युदयकाव्ये एकविंशे सर्गे ]


निर्जरा
सकामा
व्रतोपक्रमैः कृता
अकामा
(श्वभ्रनिवासिनां)
स्वविपाकेन जाता
सागारव्रतानि
अनगारव्रतं
तपः
अणुव्रतानि
गुणव्रतानि
शिक्षाव्रतानि
बाह्यं
आभ्यन्तरं
अहिंसा
सत्यं
अस्तेयं
ब्रह्मचर्यं
अपरिग्रहः
सामायिक
पोषधं
भोगोपभोग-संख्यानं
अतिथिसंवि-भागव्रत
प्रायश्चित्तं
विनयः
वैयावृत्यं
स्वाध्यायः
ध्यानं
कायोत्सर्ग
दिशापरिमाणव्रतं
देशावकाशिकव्रतं
अनर्थदण्ड-विरमणव्रतं
अनशनं
ऊनोदरता
वृत्तिसंक्षेपः
रसत्यागः
कायक्लेशः
संलीनता

**पतंगादिकांचा प्रमादः**—पतंग दृष्टिविषयानें अंध होऊन दीपशिखेवर झडप घालून स्वतःचा नाश करून घेतो. भ्रमर घ्राणेन्द्रियाच्या विषयाला लुब्ध होऊन कमलांत बद्ध होतो. हरिण शब्दविषयाच्या मोहानें व्याधाचे जाळ्यांत सांपडतो. रसनेन्द्रिय विषय लोलुप पक्षी जालबद्ध होऊन मृत्युमुखीं पड-तात. कर्णेन्द्रियाच्या विषयाच्या योगानें मोहित झालेल्या सर्पाला गारुडी पकड-तात. रसनेन्द्रियाच्या विषयाच्या सेवनानें मत्स्य गळास अडकून प्राणास मुक-तात. स्पर्शेन्द्रियाच्या विषयाचे लालसेनें हस्ती हस्तिनीच्याद्वारें बद्ध होऊन परतंत्र होतो. व्याघ्र रसनेन्द्रियाच्या विषयाच्या प्रबल पाशांत सांपडून मृतिब-न्धादि दुःख अनुभवतो. श्लोक १३३ पहा.


परिग्रह.
बाह्यपरिग्रह अथवा द्रव्यपरिग्रह
आभ्यंतरपरिग्रह
धन
धान्य
क्षेत्र
वास्तुक ( हवेली, वाडा )
रूप्य
सुवर्ण
कुप्य ( तांब्या पितळेची भांडीं )
द्विपद (दासदासी)
चतुष्पद ( गाय, बैल, घोडा, )
मिथ्यात्व
नोकषाय अथवा कषाय साहाय्यकारी
हास्य
रति
अरति
भय
शोक
जुगुप्सा
स्त्रीवेद
पुरुषवेद
नपुंसकवेद
कषाय
क्रोध
मान
माया
लोभ

परीषहः—खुहा पिवासा सीउण्हं दंसाचेलारइत्थिओ ।
चरिया निसीहिआ सेज्ञा अक्कोस वह जायणा ॥
अलाभ रोग तणफास मलसक्कारपरीसहा ।
पन्ना अन्नाण सम्मत्तं ईइ बावीस परीसहा ॥

प्रवचनसारोद्धारे पृ. २६५

अर्थः—क्षुधा, पिपासा, शीत, उष्ण, दंश, अचेल, अरति, स्त्री, चर्या, निपद्या, शय्या, आक्रोश, वध, याचना, अलाभ, रोग, तृणस्पर्श, मल, संस्कार, प्रज्ञा, अज्ञान, सम्यक्त्व ( अथवा दर्शनपरीषह ). जैनतत्वादर्श पृ. २३६—२३९ स्पष्टीकरणार्थ पहा.

**पल्योपम कालः**—एक योजन रुंद व एक योजन खोल असा वाटोळा खळगा करून मनुष्याच्या केसापेक्षां पांचशें पट सूक्ष्म अशा केशांच्या अणुरेणुसारख्या बारीक तुकड्यांनीं तो असा ठासून ठासून भरून काढावा कीं ज्यावरून चक्रवर्तीची सेनाही चालून गेली असतां त्यांतील एक परमाणु देखील दबणार नाहीं. या ठासून भरलेल्या तुकड्यांपैकीं एकेक तुकडा शंभर शंभर वर्षांनीं काढून तो खळगा रिक्त होण्यास लागणारा जो वेळ त्यास **पल्योपमकाल** ही संज्ञा आहे.

अशा पल्योपम कालाच्या कोटिकोटि व्यतीत झाल्या असतां त्यास **सागरोपमकाल** ह्मणतात.

दहा कोटिकोटि सागरोपमकाल व्यतीत झाला असतां एक **उत्सर्पिणीकाल** व तितकाच काळ लोटून गेला असतां एक **अवसर्पिणीकाल** होतो. उत्सर्पिणी व अवसर्पिणी मिळून एक **कालचक्र** ह्मणजे वीस कोटिकोटि सागरोपमकाल.

**पंचवीस क्रियाः**—कायिकी क्रिया, आधिकरणिकी क्रिया, प्राद्वेषिकी क्रिया, परितापनिकी क्रिया, प्राणातिपातिकी क्रिया, आरंभिकी क्रिया, पारिग्राहिकी क्रिया, मायाप्रत्ययिकी क्रिया, मिथ्यादर्शनप्रत्ययिकी क्रिया, इ० इ० [ जैनतत्वादर्श पृ. २३२—२३३ पहा ]

**प्रतिमाः**—जेव्हां सयमचारित्राचा अंश जागृत होऊन व भोगाच्या अरुचीचा परिणाम होऊन कोणत्या तरी प्रतिज्ञेचा उदय होतो तेव्हां त्याला प्रतिमा ह्मणतात. प्रतिमांचीं नांवें खालीं दिल्याप्रमाणें आहेतः—

१ **दर्शनप्रतिमा**—आठ मूलगुणांचा संग्रह करून व व्यसनक्रिया वर्जून सम्यग्दर्शनगुणास निर्मल करणें. ( एक मासाची )

२ व्रतप्रतिमा—पांच अणुव्रतें, तीन गुणव्रते, व चार शिक्षाव्रतें यांचें पालन. ( दोन मासांची )

३ सामायिकप्रतिमा—वचनाचे दहा दोष, कायेचे बारादोष, मनाचे दहा दोष टाळून ममता त्यागून समता ठेवणें. ( तीन मासांची )

४ पोषधप्रतिमा—पूर्वोक्त सामायिकदशेंत चार प्रहर किंवा आठ प्रहरपर्यंत राहणें. ( चार मासांची )

५ सचित्त भोजनपरिहारप्रतिमा.—( पांच मासांची )

६ दिनब्रह्मचर्यप्रतिमा—नवविधगुप्तिसहित ब्रह्मचर्यपालन. ( सहा मासांची )

७ अहोरात्र ब्रह्मचर्यप्रतिमा.—( सात मासांची )

८ निरारंभप्रतिमा—पापाचा आरंभ न करतां विवेकानें क्रिया करीत असणें. ( सात अहोरात्र )

९ परिग्रहप्रतिमा.—( सात अहोरात्र )

१० पापोपदेशत्यागप्रतिमा.—( सात अहोरात्र )

११ उचितग्राहिप्रतिमा.—घर दार सोडून मठांत साधूप्रमाणें राहणें. ( एक अहोरात्र )

१२ * * * * ( एक रात्रि)

[ प्र. र. भाग २ पृ. ५५९—५६० समयसारनाटक ]

प्रतिलेखना:—प्रतिक्रमणसूत्र पृ. ३७५–३७६ यांत मुखानंतक पडिलेहण अथवा मुहपत्ती पडिलेहण कसें करावें याची माहिती आहे. मुहपत्तीपडिलेहण करीत असतां कोणकोणत्या गोष्टींचें चिंतन करावें हें खाली सांगितलें आहे. १ सूत्र व अर्थ यांचें तत्व उत्तम प्रकारें हृदयांत धारण करतों. २ सम्यक्त्व मोहनीय ३ मिश्रमोहनीय ४ व मिथ्यात्वमोहनीय यांचा त्याग करतो. ५ कामराग ६ स्नेहराग व ७ दृष्टिराग यांना सोडतो. ८ देवतत्व ९ गुरुतत्व व १० धर्मतत्व यांचा आदर करतों. ११ कुदेव १२ कुगुरु व १३ कुधर्म यांचा त्याग करतो. १४ ज्ञान १५ दर्शन १६ चारित्र यांचा आदर करतो. १७ ज्ञान १८ दर्शन १९ चारित्र विराधनेचा त्याग करतों. २० मनोगुप्ति २१ वचनगुप्ति व २२ कायगुप्ति यांचा आदर करतों. २३ मनोदंड २४ वाग्दंड व २५ कायदंड यांना सोडतों. याच प्रमाणें पंचवीस शरीरप्रतिलेखना आहेत.

प्रमादः—प्रमादाचे प्रकार आठ आहेतः—अज्ञान, संशय, विपर्यय, राग, द्वेष, स्मृतिभ्रंश, योगदुःप्रणिधान व धर्मानादर.

**प्रसन्नचन्द्रराजर्षिकथाः**—प्रसन्नचन्द्र नांवाचा एक राजर्षि होता. श्री-महावीरस्वामीचा उपदेश श्रवण करून तो संसारविरक्त होता झाला. पुत्रास गादीवर स्थापन करून आपण पूर्ण साधु बनला. एके समयीं दोन गृहस्थ त्याजकडे आले त्यांपैकीं एकजण, साधु होऊन जन्मसार्थक्य केल्याबद्दल राजर्षीची प्रशंसा करूं लागला. तेव्हां दुसरा ह्मणाला, बालकाला गादीवर बसवून आपण साधु बनला आणि त्यामुळें प्रजेला आणि बालराजाला आपत्तींत ढकललें. कारण—परचक्र आलें आहे. हा वृत्तान्त ऐकून राजर्षीचें चित्त पुत्राकडे लागलें. मनांतल्या मनांत तो शत्रूंशीं लढूं लागला. शेवटीं निःशस्त्र झालों असें मनांत भावून आपल्या माथ्यावरील मुकुट शत्रूस फेंकून मारण्याच्या इराद्यानें त्यानें मस्तकाकडे हात नेला तों लुंचित मुंडाला स्पर्श झाला. त्या बरोबर शुद्धीवर येऊन व पश्चात्ताप पावून ह्मणाला अहह म्यां हें काय केलें ! आः किं चक्रे मया धिग् धिग् विराद्धं प्रथमं व्रतं । शुद्धमानाशयो भूयः स्वं निन्दत्यतिचारिणम् । मनोबद्धानि कर्माणि मनसैव क्षिपंस्तदा ॥ श्लोक २३५ पहा.

**पापः**—अशुभप्रवृत्त्यात्मकं आयतिदुःखदायि कर्म पापं ।

**पिंडविशुद्धिः**—दोपरहित आहार, उपाश्रय, वस्त्र व पात्र यांचा—स्वीकार करणें.

**पुद्गलः**—"सततत्वानि" या टीपेखाली दिलेले श्लोक ९०–९२ पहा.

**पुण्यः**—शुभप्रवृत्त्यात्मकं आयति सुखदायि कर्म पुण्यम् ।

**पोषधोपवासव्रतः**—चार किंवा आठ प्रहर समता ठेवून आहार, शरीर-संस्कार, मैथुन व सावद्यव्यापार यांचा त्याग करून स्वाध्याय ध्यानांत प्रवृत्त राहणें व जीवाला ज्ञानध्यानाच्या योगानें पुष्ट करणें तें पोषधव्रत.

**ब्रह्मचर्यगुप्तिः**—वसहि कह निसिज्झिदिय कुड्डुंतर पुव्वकीलियपणीए ।
अइमायाहार विभूसणा य नव बंभगुत्तीओ ॥ इति
प्रवचनसारोद्धारे । प्र. र. भाग ३ पृ. १६६

अर्थः—वसति, कथा, निषद्या (आसन), इंद्रिय, कुड्यांतर, पूर्वक्रीडित, पौष्टिक भोजन (प्रणीत), अतिमात्राहार, विभूषण या सर्व वस्तूंच्या परित्यागानें ब्रह्मचर्य पाळतां येतें.

**बाहुबलिकथाः**—बाहुबली हा भरतचक्रवर्तीचा पुत्र. यानें फार तपस्या केली होती. परंतु मानत्याग न केल्यामुळें त्याला तपश्चर्येचें फळ जे केवलज्ञान तें प्राप्त झालें नव्हतें. मानमुक्ति होण्याबरोबर केवल ज्ञानप्राप्ति झाली.

**भावना**—भाव्यते (वास्यते) वैराग्येणात्मा याभिस्ता भावनाः ।

अनित्यत्व, अशरणता, संसार, एकत्व, अन्यत्व, अशुचित्व, आस्रव, संवर, निर्जरा, लोकस्वभाव, बोधिदुर्लभता, धर्मकथक.

[ मन वचन व काय यांच्या योगानें जें शुभाशुभकर्म जीव ग्रहण करतो त्यास **आस्रव** ह्मणतात. आस्रवाचा निरोध तो **संवर.** संसाराला हेतुभूत जी कर्मसंतति तिचा समूळ नाश जिच्या योगानें होतो ती **निर्जरा. बोधिदुर्लभता** ह्मणजे धर्मज्ञान-दुर्लभता. ]

उपाध्याय श्रीविनयविजयगणिकृत "शान्तसुधारस" नांवाच्या गेयकाव्यांत षोडश भावनांचें स्वरूप उत्तम रीतीनें वर्णिलें आहे.

**भिक्षुक दृष्टान्तः**—एक गृहस्थ अति दारिद्र्यपीडित होता. तो द्रव्यार्जनाची इच्छा मनांत धरून परदेशीं जावयास निघाला तेव्हां तो एका गांवीं येऊन एका देवळांत उतरला. तेथेंच एक साधुही पूर्वींच येऊन राहिला होता. त्या साधूजवळील मनोवांच्छित वस्तु देणाऱ्या सिद्धिकुंभाचा चमत्कार पाहून त्या दारिद्र्यपीडितानें आपली कथा सांगितली. तेव्हां साधूला दया येऊन त्याला सांगितलें कीं कुंभसिद्धि विद्या किंवा सिद्ध केलेला सिद्धिकुंभ यांपैकीं जें तुला पाहिजे तें मी देण्यास तयार आहें. कुंभसिद्धिविद्येपेक्षां आयता सिद्धकुंभ बरा हें जडमतीला वाटून त्यानें साधूपासून तो कुंभ घेतला व घरीं परत आला. घटाच्या सामर्थ्यानें त्याला ऋद्धि प्राप्त झाली. पण एके दिवशीं मदिरोन्मत्त होऊन तो कुंभ हातांत घेऊन नाचूं लागला असतां खालीं पडून फुटला. अशा अविचारानें आपल्या सर्व ऐश्वर्याचें मूलसाधन नाहींसें झाल्याबद्दल त्याला अति-दुःख झालें. सद्धर्म हा सिद्धिकुंभाप्रमाणें आहे. प्रमादपरवश होऊन आपल्या हातून त्याचा नाश होणार नाहीं अशाबद्दल आपण काळजी घेतली पाहिजे. श्लोक १३२ पहा.

**मदः**— जाइ कुल रूव बल सुय तव लाभिस्सरिय अट्ठमयमत्तो।
एआइं चिअ बंधइ असुहाइं बहु च संसारे ॥
इति प्रवचनसारोद्धारे। प्र. र. भाग ३ पृ. ४१५

**अर्थः**—जातिमद, कुलमद, रूपमद, बलमद, श्रुतमद, तपोमद, लाभमद व ऐश्वर्यमद या आठ मदांनीं उन्मत्त झालेला पुरुष संसारांत अनेक पापें जोडतो.

**महाव्रतः**—अहिंसासूनृतास्तेयब्रह्मचर्यापरिग्रहाः।
पञ्चभिः पञ्चभिर्युक्ता भावनाभिर्विमुक्तये ॥

---

१. जीवदया. २. सर्वपरिग्रहत्याग.

न यत् प्रमादयोगेन जीवितव्यपरोपणम् ।
त्रसानां स्थावराणां च तदहिंसाव्रतं मतम् ॥
प्रियं पथ्यं वचस्तथ्यं सूनृतव्रतमुच्यते ।
तत्तथ्यमपि नो तथ्यमप्रियञ्चाहितञ्च यत् ॥
अनादानमदत्तस्यास्तेयव्रतमुदीरितम् ।
बाह्याः प्राणा नृणामर्थो हरता तं हता हि ते ॥
दिव्यौदारिककामानां कृतानुमतिकारितैः ।
मनोवाक्कायतस्त्यागो ब्रह्माष्टादशधा मतम् ॥
सर्वभावेषु मूर्च्छायास्त्यागः स्यादपरिग्रहः ।
यदि सत्स्वपि जीयेत मूर्च्छया चित्तविप्लवः ॥

महाव्रतभावनाः—मनोगुप्त्येषणादानेर्याभिः समितिभिः सदा ।
दृष्टान्नपानग्रहणेनाहिंसां भावयेत्सुधीः ॥
हास्यलोभभयक्रोधप्रत्याख्यानैर्निरन्तरम् ।
आलोच्य भाषणमपि भावयेत्सूनृतं व्रतम् ॥
आलोच्यावग्रहे याच्ञाऽभीक्ष्णावग्रहयाचनम् ।
एतावन्मात्रमेवैतदित्यवग्रहधारणम् ॥
समानधार्मिकेभ्यश्च तथावग्रहयाचनम् ।
अनुज्ञापि तथा नान्नासनमस्तेयभावना ॥
स्त्रीषण्ढपशुमद्वेश्मासनकुड्यान्तरोज्झनात् ।
सरागस्त्रीकथात्यागात् प्राग्रतस्मृतिवर्जनात् ॥
स्त्रीरम्यांगेक्षणस्वांगसंस्कारपरिवर्जनात् ।
प्रणीतात्यशनत्यागाद्ब्रह्मचर्यं तु भावयेत् ॥
स्पर्शे रसे च गन्धे च रूपे शब्दे च हारिणि ।
पञ्चसु हीन्द्रियार्थेषु गाढं गार्ध्यस्य वर्जनम् ॥
एतेष्वेवामनोज्ञेषु सर्वथा द्वेषवर्जनम् ।
आकिञ्चन्यव्रतस्यैवं भावनाः पञ्च कीर्तिताः ॥

---

१. देवतांच्या वैक्रियशरीरसंबंधी जे कामभोग व तिर्यग् मनुष्य यांच्या औदारिक शरीरसंबंधी जे कामभोग. २. एषणासमिति (आहारादि चार वस्तूंसंबंधानें) आदान-निक्षेप समिति व ईर्यासमिति । ३. स्निग्धमधुरादि अन्नाचा आहार.

**महाप्रातिहार्य:**—इंद्रादेशकारी देवांनीं श्रीऋषभदेवाच्या संमानार्थ केलेलीं कृत्यें त्यास प्रातिहार्य ह्मणतात.

किंकिल्लि कुसुमवुट्ठी देवज्झुणि चामरासणाइं च ।
भावलय भेरि छत्तं जयंति जिणपाडिहेराइं ॥ इति
प्रवचनसारोद्धारे । प्र० र० भाग ३ पृ. ११४

**अर्थ:**—अशोकवृक्ष, कुसुमवृष्टि, दिव्यध्वनि, चामर, आसन, भावलय, भेरी व छत्र हीं अष्टमहाप्रातिहार्ये.

**मिथ्यात्व:**—अभिग्रहमिथ्यात्व—मी समजलों तेंच सत्य आहे असा ग्रह तें.

अनभिग्रहमिथ्यात्व—सर्व धर्ममतें चांगलीं आहेत असें मानणें तें.

अभिनिवेशमिथ्यात्व—जाणूनवुजून असत्याचे ठायीं कदाग्रह तें.

संशयमिथ्यात्व—जिनोक्त तत्वांचे ठायीं शंका तें.

अनाभोगमिथ्यात्व—धर्माधर्मांची उपादेयानुपादेयता पशूप्रमाणें न समजणें तें.

**मूल अतिशय:**—भगवान् जिनाच्या ठायीं चार अतिशय आहेत—१ ज्ञानातिशय (त्रैकालिकज्ञान) २ वचनातिशय (अग्राम्यता महार्थता–अव्याहतार्थत्वादि) अपायापगमातिशय (उपद्रवनिवारकता) ४ पूजातिशय (त्रैलोक्यपूजनीयता).

**मोक्षसाधनचतुरङ्गी:**—चत्तारि परमंगाणि दुल्लहाणीह जंतुणो ।
माणुसत्तं सुई सद्धा संजमंमि य वीरियं ॥
[उत्तराध्ययनसूत्रे तृतीयाध्ययने गाथा प्रथमा]

चत्वारि परमांगानि दुर्लभाणीह जन्तोः ।
मानुषत्वं श्रुतिः श्रद्धा संयमे च वीर्यम् ॥

इति च्छाया

श्रुतिर्धर्मस्य श्रवणम् । श्रद्धा धर्मे रुचिः ।
संयमवीर्यं साध्वाचारपालने सामर्थ्यम् ।

**रजोहरण:**—जमिनीवर वस्तु ठेवतेवेळीं किंवा स्वतः वसतेवेळीं जीवहिंसा होऊं नये ह्मणून जमीन वगैरे झाडण्याकरितां सुमारें दीड हात लांबीच्या दांड्यास मऊ लोकरीच्या वीत वीत दोऱ्यांचा झुवका लावलेली संमार्जनी (झाडणी) जैनाजवळ, विशेषतः जैन साधूपाशीं असते. तिला रजोहरण हें नांव आहे.

**लेश्या:**—छल्लेसाओ कन्हा नीला काऊय तेय पह्म सिया ।

इति प्रवचनसारोद्धारे। प्र. र. भाग ३ पृ. ३९४. लेश्या शब्दाचा अर्थ अध्यवसायविशेष असा आहे. कृष्ण, नील, कापोत, तेजः, पद्म, व शुक्ल ह्या सहा लेश्यांचें स्वरूप खालीं दिलेल्या दृष्टांतावरून स्पष्ट कळेल. सहाजण सोबतीनें वाट चालत असतां एका जांभळीच्या जवळ येऊन पोहोंचले. तेव्हां त्यांपैकीं एकाच्या मनांत विचार आला कीं पिकलेलीं जांभळें हातीं येण्याकरितां झाडच मूळापासून तोडावें. विचाराप्रमाणें कृती करण्यास प्रवृत्त झाला तो त्यास दुसरा ह्मणाला मोठी शाखा तोडावी हें माझ्या विचारास येतें. हें ऐकून तिसरा सुचवितो कीं फलयुक्त लघुशाखा छेदावी. चवथ्याला ही गोष्ट पसंत न पडल्यामुळें, घोंस खालीं पडतील अशी युक्ति लढवावी असें त्यानें आपल्या सोबत्यांस सांगितलें. त्यावर पांचवा उत्तर करतो कीं पिकलेलीं जांभळें वर चढून तोडून खावीं. शेवटीं सहावा ह्मणाला गळून खालीं पडलेलीं पक्व जांभळें वेंचून खावीं हें सर्वांत उत्तम.

वणिक्त्रयी दृष्टान्तः—एका शेठ्याला तीन पुत्र होते. त्यांना प्रत्येकीं एक एक हजार रुपये देऊन परदेशीं व्यापार करावयास पाठविले. तेथें एका पुत्रानें आपलें धन नाचतमाशे करण्यांत व खाण्यापिण्यांत घालविलें. दुसऱ्यानें व्यापारधंदा करण्याकडे खर्च करून त्यापासून होणारे उत्पन्नावर आपला निर्वाह चालविला व मूलधन कायम ठेवलें. तिसऱ्यानेंही व्यापार केला परंतु उत्पन्नापैकीं अवश्य तेवढाच भाग खर्च करून बाकीचें उत्पन्न मूलधनांत जमा करीत असे. ईशकृपेनें प्राप्त झालेला महादुर्लभ अशा नरदेहाचा लाभ वणिक्पुत्राच्या मूलधनाप्रमाणें आहे. त्याचा सदुपयोग किंवा दुरुपयोग किंवा नाश ज्या त्या व्यक्तीवर अवलंबून आहे. श्लोक १३२ पहा.

वसुराजकथाः—पर्वत, वसु व नारद यांना एके वेळीं त्यांच्या गुरूनें सांगितलें कीं तुह्मांपैकीं प्रत्येकानें हा एकेक पिष्टकुक्कुट कोणासही दिसणार नाहीं अशा ठिकाणीं मारून टाकावा. पहिल्या दोघांनीं एकांतीं जाऊन पिष्टकुक्कुटाचा वध केला. नारदानें मात्र केला नाहीं कारण त्यानें आपल्या मनांत विचार केला कीं "नास्त्येव स्थानमपि तद्यत्र कोऽपि न पश्यति".

वैयावृत्त्यः—आयरिय उवज्झाय तवस्सि सेहे गिलाण साहुसु।
समणोन्न संघ कुल गण वेयावच्चं हवइ दसहा ॥

आचार्य, उपाध्याय, तपस्वी, शिष्य, ग्लान, साधु, समनोज्ञ (ज्याची स्वतःसारखी समाचारी आहे), संघ, समानगच्छांचा समूह, समान आचार्यांची शिष्य-

परंपरा-यांना अन्नवस्त्रादि अर्पण करणें, त्यांची शुश्रूषा करणें याप्रमाणें वैयावृत्य दहा प्रकारांचें आहे.

**श्रमणधर्मः**—खंति य मद्दवज्जव मुत्ती तव संजमे य बोधव्वा ।
सच्चं सोयं अकिंचणं च बंभं च जइधम्मो ॥

[ क्षान्ति, मार्दव, आर्जव, लोभत्याग, तप, संयम (आस्रवाची त्यागवृत्ति), सत्य, शौच, अकिंचनता, ब्रह्मचर्य. ]

**शाकटिक दृष्टान्तः**—अमुक रस्ता वाईट आहे व अमुक रस्ता चांगला आहे हे माहीत असतांही वाईट रस्त्यानेंच आपली गाडी एका गाडीवाल्यानें हांकली व अर्थात् ती मोडली. तेव्हां जाणूनबुजून आपण आपल्या पायावर धोंडा पाडून घेण्यासारखे कृत्य केलें याबद्दल त्याला पश्चात्ताप झाला. पाप करून पापाचें फळ प्राप्त झाल्यावर पुण्य केलें असतें तर बरें झालें असतें हें ह्मणणें शुष्क आहे. श्लोक १३२ पहा.

## श्राद्धधर्म अथवा श्रावकधर्म.

(देशविरतिचारित्ररूप द्वादशविध गृहस्थधर्म)

**अणुव्रतें:**—(१) स्थूलप्राणातिपातविरमणव्रत. (२) स्थूल मृषावादविरमणव्रत. (३) स्थूल अदत्तादानविरमणव्रत. (४) स्थूल परस्त्रीगमनविरमणव्रत. (५) स्थूल परिग्रहपरिमाणव्रत.

**गुणव्रतें:**—(६) दिक् परिमाणव्रत. (७) देशावकाशिव्रत. [ हें सहाव्या व्रताचें संक्षेपव्रत आहे. या व्रतांत गमन करण्याची मर्यादा अधिक संकुचित करावी लागते ] (८) अनर्थदण्डविरमणव्रत [ स्वतःचा कांहीं एक अर्थ ज्यां-पासून साधत नाहीं अशा पापक्रियांस अनर्थदंड ह्मणतात ].

**शिक्षाव्रतें:**—(९) सामायिकव्रत [ समतापालनरूपव्रत ] (१०) पोपधोपवास-व्रत [ द्वितीया, पंचमी, अष्टमी, एकादशी व चतुर्दशी ह्या पर्वतिथींस चार किंवा आठ प्रहरपर्यंत व्रत पाळणें ] ११ भोगोपभोगसंख्यानव्रत—[ एकवार ज्यांचा उपयोग होतो ते भोग; जसें, आहार, पुष्प, विलेपन; वारंवार ज्यांचा उपयोग होतो ते उपभोग; जसें, भवन, वस्त्र, स्त्री इत्यादि ] १२ अतिथिसंविभागव्रत.

[ धर्मशर्माभ्युदयकाव्ये एकविंशे सर्गे श्लोकाः १२४, १२५, १४२, १४३, १४९-१५३. ]




[ धर्मशर्माभ्युदयकाव्ये एकविंशे सर्गे श्लो० ८१—९२. ]

धर्मास्तिकाय जीव व पुद्गल यांना गतिसाहाय्यद; अधर्मास्तिकाय स्थितिसाहाय्यद; आणि आकाशास्तिकाय, अवकाशदायक आहे. जेथपर्यंत धर्मास्तिकाय अधर्मास्तिकाय व आकाशास्तिकाय हीं तीन द्रव्यें एकमेकांत मिळून गेलेलीं आहेत तेथपर्यंत लोकप्रदेश व जेथें केवळ आकाशास्तिकाय द्रव्य आहे तो अलोकप्रदेश.




**भवनवासी देव**—असुर–नाग–सुपर्ण–विद्युत्–अग्नि–द्वीप–उदधि–दिक्—यात–धनिककुमार.

**व्यंतर**—पिशाच–भूत–यक्ष–राक्षस–किंनर–किंपुरुप–महोरग–गंधर्व.

**ज्योतिष्क**—चंद्र–सूर्य–नक्षत्र–ग्रह–तारागण.




[ उत्तराध्ययनसूत्र-अध्ययन ३६ ]

**षडावश्यकानि:**—समता वंदन थुतिकरन पडिकमनो सज्झाओ ।
काउस्सग्गमुद्राधरन ए षडावसिक भाओ ॥
इति समयसार नाटके ।

प्र. र. भाग २ पृ. ५६५

समता, वन्दन, स्तुतिकरण, प्रतिक्रमण, स्वाध्याय, व कायोत्सर्ग मुद्राधारण ह्या सहा आवश्यक क्रिया.

[ प्रतिक्रमण ( पडिक्कमणं ) ह्मणजे मागें फिरणें. संयमरूप स्थानकापासून असंयमरूप स्थानकाकडे जाणें तें क्रमण आणि असंयमरूप स्थानकापासून संयमस्थानकाकडे परत फिरणें तें प्रतिक्रमण. "स्वस्थानाद्यत्परं स्थानं प्रमादस्य वशाद्गतः । तत्रैव क्रमणं भूयः प्रतिक्रमणमुच्यते ॥" ]

[ कायोत्सर्गः ( काउसग्ग ) अतिचारशुद्ध्यर्थं कायस्य व्युत्सर्जनं कायममत्ववर्जनम् । ]

**षोडशभियः**—१-९ परिग्रह वियोगचिन्ता १० इहभवभय, ११ परलोकभय ( दुर्गतिगमनभय ), १२ मरणभय, १३ वेदनाभय ( रोगादिकष्टभय ), १४ अनरक्षाभय ( कोणी त्राता नसल्यामुळें उत्पन्न होणारें भय ), १५ अनगुप्तभय ( चौरभय विचार ), व १६ अकस्मात भय.

प्र. र. भाग २ पृ. ४३२ समयसारनाटक.

**सप्ततत्वानि:**—जीवाजीवास्रवा बन्धसंवरावपि निर्जरा ।
मोक्षश्चेतीह तत्वानि सप्त स्युर्जिनशासने ॥ ८ ॥

बन्धान्तर्भाविनोः पुण्यपापयोः पृथगुक्तितः ।
पदार्था नव जायन्ते तान्येव भुवनत्रये ॥ ९ ॥

[ जीवः ]

अमूर्तश्चेतनाचिह्नः कर्ता भोक्तातनुप्रभः ।
ऊर्ध्वगामी स्मृतो जीवः स्थित्युत्पत्तिव्ययात्मकः ॥ १० ॥

[ अजीवः ]

धर्माधर्मौ नभः कालः पुद्गलश्चेति पञ्चधा ।
अजीवः कथ्यते सम्यग्जिनैस्तत्त्वार्थदर्शिभिः ॥ ८१ ॥
षड्द्रव्याणीति वर्ण्यन्ते समं जीवेन तान्यपि ।
विना कालेन तान्येव यान्ति पञ्चास्तिकायताम् ॥ ८२ ॥
धर्मः स तात्त्विकैरुक्तो यो भवेद्गतिकारणम् ।
जीवादीनां पदार्थानां मत्स्यानामुदकं यथा ॥ ८३ ॥
छायेव धर्मतप्तानामश्वादीनामिव क्षितिः ।
द्रव्याणां पुद्गलादीनामधर्मः स्थितिकारणम् ॥ ८४ ॥
लोकाकाशमभिव्याप्य स्थितावेतावनिष्क्रियौ ।
नित्यावप्रेरकौ हेतू मूर्तिहीनावुभावपि ॥ ८५ ॥
पुद्गलादिपदार्थानामवगाहैकलक्षणः ।
लोकाकाशः स्मृतो व्यापी शुद्धाकाशो बहिस्ततः ॥ ८६ ॥
धर्माधर्मैकजीवाः स्युरसंख्येयप्रदेशकाः ।
व्योमानन्तप्रदेशं तु सर्वज्ञैः प्रतिपाद्यते ॥ ८७ ॥
जीवादीनां पदार्थानां परिणामोपयोगतः ।
वर्तनालक्षणः कालोऽनंशो नित्यश्च निश्चयात् ॥ ८८ ॥
कालो दिनकरादीनामुदयास्तक्रियात्मकः ।
औपचारिक एवासौ मुख्यकालस्य सूचकः ॥ ८९ ॥
रूपगन्धरसस्पर्शशब्दवन्तश्च पुद्गलाः ।
द्विधा स्कन्धाणुभेदेन त्रैलोक्यारम्भहेतवः ॥ ९० ॥
भूमितैलतमोगन्धकर्माणुप्रकृतिः क्रमात् ।
स्थूलास्थूलादिभेदाः स्युस्तेषां षोढा जिनागमे ॥ ९१ ॥

भाषाहारशरीराख्यप्राणापानादिमूर्तिमत् ।
यत्किञ्चिदस्ति तत्सर्वं स्थूलं सूक्ष्मं च पुद्गलम् ॥ ९२ ॥

[ आस्रवः ]

शरीरवाङ्मनःकर्मयोग एवास्रवो मतः ।
शुभाशुभविकल्पोऽसौ पुण्यपापानुपङ्गतः ॥ ९४ ॥

[ बन्धः ]

सकपायतयादत्ते जीवोऽसंख्यप्रदेशगान् ।
पुद्गलान् कर्मणो योग्यान् बन्धः स इह कथ्यते ॥ १०६ ॥
मिथ्यादृक् च प्रमादाश्च योगाश्चाविरतिस्तथा ।
कपायाश्च स्मृता जन्तोः पञ्च बन्धस्य हेतवः ॥ १०७ ॥
प्रकृतिस्थित्यनुभागप्रदेशानां विभेदतः ।
चतुर्विधः प्रणीतोऽसौ जैनागमविचक्षणैः ॥ १०८ ॥
अष्टौ प्रकृतयः प्रोक्ता ज्ञानावृतिदृगावृती ।
वेद्यं च मोहनीयायुर्नामगोत्रान्तराययुक् ॥ १०९ ॥

[ संवरः ]

आस्रवद्वाररोधेन शुभाशुभविशेषतः ।
कर्म संव्रियते येन संवरः स निगद्यते ॥ ११८ ॥
आस्रवः संसृतेर्मूलं मोक्षमूलं तु संवरः ॥ १२० ॥

[ निर्जरा ]

दुर्जरं निर्जरत्यात्मा यया कर्म शुभाशुभम् ।
निर्जरा सा द्विधा ज्ञेया सकामाकामभेदतः ॥ १२२ ॥
सा सकामा स्मृता जैनैर्या व्रतोपक्रमैः कृता ।
अकामा स्वविपाकेन यथा श्वभ्रादिवासिनाम् ॥ १२३ ॥

[ मोक्षः ]

अभावाद्बन्धहेतूनां निर्जरायाश्च यो भवेत् ।
निःशेपकर्मनिर्मोक्षः स मोक्षः कथ्यते जिनैः ॥ १६० ॥

इति धर्मशर्माभ्युदयकाव्ये एकविंशे सर्गे

सप्तक्षेत्रीः—जिनबिंब, जिनमंदिर, पुस्तक, साधु, साध्वी, श्रावक, श्राविका. साधु आदि चार क्षेत्रांना संघ अशी संज्ञा आहे.

**समिति**—इरिया भासा एसण आयाणाईसु तह य परिट्ठवणा । सम्मंजू उपविसा सा समई पंचहा एवं ॥ इति प्रवचनसारोद्धारे

प्र. र. भाग. ३ पृ. २०८

**अर्थ**—ईर्यासमिति ( यत्नेन चंक्रमणं ) ह्मणजे चालतांना पायाखालीं चिरडून जाऊन जीवांची हिंसा होऊं नये यास्तव नीट पाहून चालणें; भाषासमिति ( विचार्य भाषणम् ) विचार करून बोलणें; एषणासमिति ( शुद्धाहारादिग्रहणम् ) दोषरहित आहारादिकांचें ग्रहण; आदाननिक्षेपसमिति ( वस्त्रपात्रप्रमुखोपकरणानां ग्रहणं मुञ्चनं वा ) कोणतीही वस्तु ठेवतांना किंवा उचलून घेतांना नीट पाहून ठेवणें किंवा घेणें; परिष्ठापनासमिति ( उच्चारपरिष्ठापना ) पुरीष, श्लेष्म, मल, अन्न पाणी वगैरे जीवरहित भूमिकेवर टाकणें.

सम्यक्त्व—धर्माप्तगुरुतत्वानां श्रद्धानं यत्सुनिर्मलम् ।
शङ्कादिदोषनिर्मुक्तं सम्यक्त्वं तन्निगद्यते ॥ १२७ ॥
तत्र धर्मः स एवात्र यः प्रोक्तो दशलक्षणः ।
आप्तास्त एव ये दोषैरष्टादशभिरुज्झिताः ॥ १२८ ॥
गुरुः स एव यो ग्रन्थैर्मुक्तो बाह्यैरिवान्तरैः ।
तत्वं तदेव जीवादि यदुक्तं सर्वदर्शिभिः ॥ १२९ ॥
शङ्काकाङ्क्षा विचिकित्सा मूढदृष्टिः प्रशंसनम् ।
संस्तवश्चेत्यतीचाराः सम्यग्दृष्टेरुदाहृताः ॥ १३० ॥
अदेवे देवबुद्धिर्या गुरुधीरगुरावपि ।
अतत्वे तत्वबुद्धिश्च तन्मिथ्यात्वं विलक्षणम् ॥ १३१ ॥
मधुमांसासवत्यागः पञ्चोदुम्बरवर्जनम् ।
अमी मूलगुणाः सम्यग्दृष्टेरष्टौ प्रकीर्तिताः ॥ १३२ ॥
द्यूतं मांसं सुरा वेश्या पापर्धिः स्तेयवृत्तिता ।
परदाराभियोगश्च त्याज्यो धर्मधुरन्धरैः ॥ १३३ ॥
मोहादमूनि यः सप्त व्यसनान्यत्रसेवते ।
अपारे दुःखकान्तारे संसारे बम्भ्रमीति सः ॥ १३४ ॥

इति धर्मशर्माभ्युदयकाव्ये एकविंशे सर्गे

**संयम**— पंचासवा विरमणं पंचिंदियनिग्गहो कसायजओ ।
दंडत्तयस्स विरई सत्तरसहा संयमो होई ॥ इति प्रवचन सारोद्धारे ।
प्र. र. भाग. ३ पृ. १६२

